# Shri Bodhayanamatadarshah

# श्रीबोधायनमतादर्शः

## Document Information



Text title : Bodhayanamatadarshah

File name : bodhAyanamatAdarshaH.itx

Category : raama, rAmAnanda, upadesha, advice, major_works

Location : doc_raama

Author : pUrNAnandAchArya

Latest update : January 19, 2024

Send corrections to : sanskrit at cheerful dot c om



Please note that proofreading is done using Devanagari version and other language/scripts are generated using **sanscript**.

January 19, 2024

*sanskritdocuments.org*

# श्रीबोधायनमतादर्शः



अथ जगद्गुरु श्रीपूर्णानन्दाचार्य सिद्धान्तसार्वभौम विरचितः
श्रीबोधायनमतादर्शः ।
(प्रमिताक्षरावृत्तिसारः सहस्रश्लोकी)
स्वशताब्दीमहोत्सवे श्रीपूर्णानन्दाचार्योपदिष्टो वेदान्तप्रबन्धः

रामं बोधायनं नत्वा चिदानन्दं गुरुं तथा ।
बोधायनमतादर्शं कुर्वे सिद्धान्तबुद्धये ॥ १॥

यो ब्रह्माणं विदधाति इत्येतच्छ्रुतिमानतः ।
रामो विधि विधायादौ तस्मै वेदं हि दत्तवान् ॥ २॥

प्रधानक्षेत्रज्ञपतिर्गुणेश इति च श्रुतौ ।
प्रधानजीवब्रह्मेति तत्त्वत्रयं समीरितम् ॥ ३॥

अचेतनं प्रधानं हि तत्र च त्रिगुणं जडम् ।
ब्रह्मणाधिष्ठितं तच्च जगतः कारणं मतम् ॥ ४॥

अजडश्चेतनो जीवो, जगद्व्यापारवर्जितः ।
अजडं चेतनं ब्रह्म जगज्जन्मादिकारणम् ॥ ५॥

जीवश्च प्रकृतिर्ब्रह्मदेहत्वाद्धि विशेषणे ।
शरीरी चोभयोर्ब्रह्म विशिष्टं तद्द्वयेन च ॥ ६॥

ननु रामे शरीरित्वात् भोक्तृता सुखदुःखयोः ।
न ह वै सशरीरस्य प्रमाणं चात्र वर्त्तते ॥ ७॥

मैवं दुःखादिभोक्तृत्वे शरीरित्वं न कारणम् ।
किन्तु पापादिवैशिष्ट्यं भूपालचौरयोरिव ॥ ८॥

सूक्ष्माचिच्चिद्विशिष्टः श्रीरामो ब्रह्म हि कारणम् ।
स्थूलाचिच्चिद्विशिष्टस्तु कार्यं ब्रह्म स भाषितः ॥ ९॥

द्वयोर्विशिष्टयोश्चाथ कार्यकारणरामयोः ।
“सदेव सोम्येदमग्र आसादितिश्रुतौ यतः ॥ १०॥

ऐक्यमापादितं तस्माच्छ्रीमद्बोधायनो मुनिः ।
मेने च सुमतं श्रौतं विशिष्टाद्वैतसंज्ञकम् ॥ ११॥

अखिलाः श्रुतयो द्वैते चाद्वैते सङ्गता न हि ।
विशिष्टाद्वैतवादे तु सर्वास्ताः सङ्गतिं गताः ॥ १२॥

अद्वैतबोधिकाः काश्चित् काश्चिद् द्वैतावबोधिकाः ।
घटकश्रुतयः काश्चिदन्तर्यामिप्रबोधिकाः ॥ १३॥

अप्रामाण्यं भवेत् तासां विरोधेऽभिमते मिथः ।
विशिष्टाद्वैतिभिस्तासां क्रियतेऽतः समन्वयः ॥ १४॥

अद्वैतश्रुतयो बोध्या विशिष्टब्रह्मबोधिकाः ।
नान्यश्रुतिमतानां हि तत्वानां प्रतिषेधिकाः ॥ १५॥

परं ब्रह्म च तद्वाच्यं त्वद्वाच्यं त्वच्छरीरकम् ।
तत्त्वमसीतिवाक्येन तूक्तोऽभेदस्तयोर्द्वयोः ॥ १६॥

द्वैतश्रुतिसमूहस्तु विद्वद्भिः सम्मतः खलु ।
चिदचिदीशतत्त्वानां पार्थक्येनावबोधकः ॥ १७॥

आत्मत्वमीश्वरस्याथ चिदचितोश्च देहता ।
सर्वाभिर्विनिवेद्येते घटकश्रुतिभिः किल ॥ १८॥

वेदान्ततत्त्वविद्भिश्च कार्यकारणभेदतः ।
चिदचिद्भ्यां विशिष्टं तु ब्रह्म च द्विविधं मतम् ॥ १९॥

स्थूलाचिच्चिद्विशिष्टं हि ब्रह्मकार्यं प्रकीर्त्तितम् ।
सूक्ष्माचिच्चिद्विशिष्टं तु ब्रह्म कारणमुच्यते ॥ २०॥

अद्वैतं मन्यते प्राज्ञैर्ब्रह्मणोश्च विशिष्टयोः ।
विशिष्टाद्वैतसिद्धान्तस्तस्माच्छ्रुत्यनुमोदितः ॥ २१॥

अत एवास्मदाचार्यबोधायनादिसम्मतः ।
विशिष्टाद्वैतसिद्धान्तो लोके विजयतेतराम् ॥ २२॥

सर्वासां च श्रुतीनां हि श्रुतानन्देन धीमता ।
एवं समन्वयः प्रोक्तः सर्वश्रुतिसमन्वये ॥ २३॥

ईश्वरः
अनित्यफलकं कर्म श्रुत्या ज्ञात्वा मुमुक्षुभिः ।
यन्नित्यफलकं तद्धि कर्त्तव्यं ब्रह्मवेदनम् ॥ २४॥

जगज्जन्मान्दिहेतुश्च ब्रह्म वेदान्तबोधितम् ।
बहु स्यामि तिसङ्कल्पकारको जानकीश्वरः ॥ २५॥

जगत्सृष्ट्यादिकर्त्ता श्रीरामो ब्रह्म परात्परम् ।
श्रीबोधायनगीतायामिति रामस्य ब्रह्मता ॥ २६॥

दृश्यमानं जगत् सर्वं चेतनाचेतनात्मकम् ।
अदृश्यरूपतां प्राप्य श्रीरामे कारणे स्थितम् ॥ २७॥

अक्षरं लीयते तावत् तमसीति श्रुत्तौ मतम् ।
तमश्च लोयते रामे श्रीरामो न च कुत्रचित् ॥ २८॥

रामात् परतरं तत्त्वं नान्यदस्ति हि किञ्चन ।
सर्वस्य प्रभवो रामो रामात् सर्वमिदं जगत् ॥ २९॥

नामरूपक्रियोभिश्च रामे सर्वं प्रतिष्ठितम् ।
दृश्यत्वेनोत्थितं सर्वं रामात् काष्ठाद् यथाऽनलः ॥ ३०॥

घटवती धरा पूर्वं घटशून्या प्रतीयते ।
पश्चाद् घटेन युक्ता सा सविशेषाऽनुभूयते ॥ ३१॥

तथा विकल्पशून्योऽपि सविकल्पो हि राघवः ।
सर्वावस्थास्थितस्यास्य ह्याधारश्चाखिलस्य सः ॥ ३२॥

सविकल्पाविकल्पत्वे ईक्षणीये च राघवे ।
वीक्ष्यते वटवीजे यद् वटो नापि हि वीक्ष्यते ॥ ३३॥

अव्यक्तं कारणे रामे सर्वं कार्ये च व्यज्यते ।
तथा न सकलं रामः सर्वमेव च राघवः ॥ ३४॥

सर्वाधारतया श्रीमद्रामश्चैकोऽद्वयः परः ।
तदेकायनतो रामः सर्वं नैवात्र संशयः ॥ ३५॥

उपादानं निमित्तं च सर्वस्यैको हि राघवः ।
ऊर्णनाभिर्यथा तन्तोर्मन्यते कारणद्वयम् ॥ ३६॥

उपादानत्वमेतस्य विश्वस्य ब्रह्मणि किल ।
सदेव सोम्येदमग्र इत्यादिश्रुतिसम्मतम् ॥ ३७॥

न ब्रह्मा नाऽपि विष्णुश्च नो तदासीन्महेश्वरः ।
तदासीद् भगवान् रामः सूक्ष्मचिदचिच्छरीरकः ॥ ३८॥

उपादानतया रामे विकारः सम्भवेन्ननु ।
मैवं विशिष्टरामस्य मतः स च प्रकारयोः ॥ ३९॥

स्वभावे च स्वरूपे च विकारः प्रकृतेः खलु ।
विकारः सोऽथ जीवस्य स्वभाव एव मन्यते ॥ ४०॥

विशेष्यब्रह्मणः सोऽथ न स्वरूपस्वभावयोः ।
ब्रह्मोपादानतावादिश्रुतिकोपोऽपि नो भवेत् ॥ ४१॥

साङ्ख्यास्तु जगतो हेतुं मन्यन्ते प्रकृतिं किल ।
सुखदुःखात्मकं चाथ मोहात्मकं जगद् यतः ॥ ४२॥

वर्त्तते च जगत् तस्मात् सत्वादित्रिगुणात्मकम् ।
प्रधानं त्रिगुणं तस्मादुपादानं च तस्य हि ॥ ४३॥

मृदात्मकघटस्यात्रोपादानं च मृदेव हि ।
सद्वाच्यप्रकृतिज्ञानाद् विश्वज्ञानं भवेदपि ॥ ४४॥

इति चेद् युक्तता नास्य रचनानुपपत्तितः।
अचेतनप्रधानस्योपादानावगमः कथम् ॥ ४५॥

वैषम्यं च कथं सृष्टेः कर्माज्ञानाच्च देहिनाम् ।
रजःसत्वसुयोगाच्च क्रियाज्ञानोभयं न हि ॥ ४६॥

चेतन एव तद्योगात् क्रियाज्ञानद्वयं यतः ।
अचिज्ज्ञानात् कथं ज्ञातं भवेच्चिदचिदात्मकम् ॥ ४७॥

नाचेतनं जगत् किन्तु चेतनाचेतनत्मकम् ।
अचेतनं प्रधानं स्याच्चेतनकारणं कथम् ॥ ४८॥

कथं नु चेतनं ब्रह्माचेतनकारणं भवेत् ।
मैवं चिताऽचिता यस्माद् विशिष्टं ब्रह्म सम्मतम् ॥ ४९॥

उपादानं मतं ब्रह्म चिदचिद्द्वारकं यतः ।
प्रकारांशे विकारस्तद् ब्रह्मणो निर्विकारता ॥ ५०॥

चेतनेनानधिष्ठाने प्रवृत्तिः प्रकृतौ कथम् ।
दधिस्वरूपतां याति चेश्वराधिष्ठितं पयः ॥ ५१॥

सर्वस्येशनियन्तृत्वं योऽप्स्वादिकश्रुतौ श्रुतम् ।
अचेतनगुणानां तु मिथश्चाङ्गाङ्गिता कथम् ॥ ५२॥

पुरुषसन्निधौ चेत् सा तदास्यात् सृष्टिनित्यता ।
पुंसः प्रवर्त्तकत्वे तस्यौदासीन्यं न सम्भवेत् ॥ ५३॥

न स्यात् साम्यदशा तेषा गुणानां च स्वतः च्युतौ ।
तदानीमितराभावाच्चेतरस्मान्न सा च्युतिः ॥ ५४॥

श्रुतं सर्वत्र वेदान्ते जगतो ब्रह्म कारणम् ।
सदवाच्ये लीयते चात्मा सद्वाच्या प्रकृतिर्न तत् ॥ ५५॥

तदैक्षते ति सद्वाच्य ईक्षणं हि यतः श्रुतम् ।
सद्वाच्या प्रकृतिस्तस्मादीक्षणाभावतो न हि ॥ ५६॥

चेतनस्य हि धर्मस्य सर्वसम्मतमीक्षणम् ।
कदाचिच्च कथञ्चिन्न प्रकृतौ तस्य सम्भवः ॥ ५७॥

तेजस्यचेतने चापि तत्तेज ऐक्षत इति ।
ईक्षणं च श्रुतं गौणं प्रकृतौ तद्वदेव नु ॥ ५८॥

मैवमुत्तरवाक्येषु चात्मशब्दः श्रुतो यतः ।
स चेतनस्ततस्तस्य चेक्षणं मुख्यमेव हि ॥ ५९॥

तेत्तेज ऐक्षत चादावन्तर्यामिण ईक्षणम् ।
मुख्यमेव तु तच्चापि तेजोऽन्तस्थो हि चेतनः ॥ ६०॥

सच्छब्दवाच्यनिष्ठस्य मोक्षस्य चोपदेशतः ।
जगद्धेतुः परब्रह्म सद्वाच्यं प्रकृतिर्न हि ॥ ६१॥

वदन्ति सृष्टिचर्चायां वैशेषिकानुयायिनः ।
क्षित्यप्तेजः समीराणां हेतवः परमाणवः ॥ ६२॥

न रम्यं कथनं तेषां विकल्पासहता यतः ।
सावयवा न वा तैश्च स्वीकृताः परमाणवः ॥ ६३॥

तेषामवयवानां च तथाभूतेऽनवस्थितिः ।

आद्यः पक्षो न तद् रम्यः समीचीनो न चान्तिमः ॥ ६४॥

तेषामवयवाभावे संयोगो न भवेन्मिथः ।
अंशं विना तु संयोगः कथञ्चित् सम्भवेन्न हि ॥ ६५॥

अन्यथा चैकदेशस्थैः स्वाधिकदेशवर्त्तिनः ।
न स्यात् कार्यस्य चारम्भः तैः परमाणुभिः खलु ॥ ६६॥

नास्पृष्टेऽवयवैर्देशे दृष्टाऽवयविनः स्थितिः ।
दिग्भेदात् परमाणूनां स्यात् सावयवतैव च ॥ ६७॥

तन्मते परमाणूनां स्पन्दे संयोगहेतुता ।
स्पन्दकारणता चाथ जीवादृष्टे हि मन्यते ॥ ६८॥

समवेतमदृष्टं तज्जीवे नो परमाणुषु ।
स्पन्दे हि परमाणूनां कथञ्चित् कारणं न तत् ॥ ६९॥

अन्यादृष्टमन्यथा स्याद् हेतुरन्यसुखादिके ।
अदृष्टे परमाणुस्थे सृष्टिश्च सर्वदा भवेत् ॥ ७०॥

क्षणिकान् परमाणूंश्च क्षित्यादीनां हि सौगताः ।
उपादानं वदन्त्यत्र बाह्यार्थास्तित्ववादिनः ॥ ७१॥

क्षित्यादयः प्रजायन्ते संहितैः परमाणुभिः ।
हेतुत्वे परमाणूनां प्रोक्तैर्दोषैर्वरं न तत् ॥ ७२॥

संहिताश्च कथङ्कारं क्षणिकाः परमाणवः ।
विज्ञानविषयत्वं च क्षणिकेषु न सम्भवेत् ॥ ७३॥

बाह्यार्थानां प्रकाशाय ज्ञानञ्चाभ्युपगम्यते ।
बाह्यार्थास्तु ततश्चैव योगाचारो न मन्यते ॥ ७४॥

ज्ञानस्य परिणामा हि बाह्यार्थास्तेन सम्मताः ।
प्रकाशते हि साकारो निराकारो न कर्हिचित् ॥ ७५॥

ज्ञानसत्त्वे च बाह्यार्था ज्ञानाभावे हि नो ततः ।
विज्ञानमेव मन्तव्यं बाह्यार्थास्तु कदापि न ॥ ७६॥

मैवं यतश्च बाह्यार्थो ज्ञानाद् भिन्नः प्रतीयते ।
घटाच्च घटविज्ञानं भिन्नं सर्वस्य सम्मतम् ॥ ७७॥

जैनैर्मता उपादानहेतवः परमाणवः ।
तेभ्यश्चैकस्वभावेभ्यो जायन्ते च धरादयः ॥ ७८॥

क्षित्यादेश्च मिथो भेदः परिणामकृतो मतः ।
मैवं नो चेद्धि मृत्पिण्डाज्जायतां घटवत् पटः ॥ ७९॥

हेतुत्वे परमाणूनां दोषाः पूर्वं समीरिताः ।
मतोपादानता तन्न वैदिकैः परमाणुषु ॥ ८०॥

कैश्चित् त्विह यथा शुक्तावध्यस्तं रजतं खलु ।
जगदेतत् तथाऽध्यस्तं ब्रह्मण्यविद्यया मतम् ॥ ८१॥

तदयुक्तं यतोऽविद्याऽऽश्रयस्यात्र न सम्भवः ।
परस्पराश्रयो दोषो जीवे तदाश्रये मते ॥ ८२॥

परस्परविरोधाच्च नैव ब्रह्म तदाश्रयः ।
आश्रयानुपपत्तेश्चाविद्यासिद्धिर्भवेन्न तत् ॥ ८३॥

जन्माद्यस्य यतश्चैवं व्यासेन सूत्रितं ततः ।
न तेन सूत्रितं तस्माद् व्यासो जगतो यतः ॥ ८४॥

परिणामात् तु सूत्रेण मता परिणामिहेतुता ।
हेतुता ब्रह्मणस्तस्माद् विवर्त्तविधया ने हि ॥ ८५॥

उपादानं निमित्तं च जगतो राघवो मतः ।
श्रुतयो निर्विकारत्वं वदन्ति ब्रह्मणो ननु ॥ ८६॥

व्यकुप्येयुर्हि ताश्चैवं कुतश्चेदुच्यते यतः ।
विकारीति मतं सर्वैरुपादानं विचक्षणैः ॥ ८७॥

इति चेदुच्यते ह्यत्र नैवं वाच्यं कुतो यतः ।
प्रतिज्ञातं श्रुतौ सर्वज्ञानमेकस्य ज्ञानतः ॥ ८८॥

दृष्टान्तः कथितश्चापि मृत्कार्याणां मृदस्तथा ।
उपादानं घटादेर्हि मृत्तिका परिकीर्तिता ॥ ८९॥

परिणता यतो मृद्धि घटादिरूपतः खलु ।
उपादानस्य विज्ञानादुपादेयावबोधतः ॥ ९०॥

मृज्ज्ञानेन घटादीनां विज्ञानं सम्मतं यथा ।
एकस्य ब्रह्मणो ज्ञानाद् विज्ञानं जगतस्तथा ॥ ९१॥

उपादानं यतो ब्रह्म जगतोऽस्य मतं बुधैः ।
परिणतं यतो ब्रह्म जगद्रूपेण सम्मतम् ॥ ९२॥

व्यासेन "प्रकृतिश्चे" त्यादिकं हि सूत्रितं ततः ।
श्रीबोधायनवृत्तौ तद् व्यख्यातमेवमेव च ॥ ९३॥

ब्रह्मणः परिणामो हि प्रकारद्वारको जगत् ।
विकारित्वं ततो द्वारे प्रकृतिपुरुषद्वये ॥ ९४॥

स्वरूपे च स्वभावे च विकारः प्रकृतेः खलु ।
स्वभाव एव जीवस्य विकारः स्वीकृतो बुधैः ॥ ९५॥

ब्रह्मणस्तु विकारो यन्न स्वरूपस्वभावयोः ।
व्याकोपावसरः कश्चिच्छ्रुतीनां वर्त्तते न तत् ॥ ९६॥

परिणामविमर्शो हि द्वारानन्दार्यनिर्मिते ।
इत्येवं परिणामो हि विमृष्टो ब्रह्मणः सतः ॥ ९७॥

ईशे सृष्टिनिमित्तत्त्वे नैर्घृण्यं च भवेन्ननु ।
मैवं यद् दैवसापेक्षा सृष्टिदोषस्ततश्च न ॥ ९८॥

ततो वैषम्यनैर्घृण्ये इत्येवमादिरूपतः ।
भगवता हि व्यासेन सूत्रितं ब्रह्मदर्शने ॥ ९९॥

श्रीपुरुषोत्तमार्येण बोधायनमहर्षिणा ।
बोधायनमहावृत्तौ व्यख्यातञ्चैवमेव तत् ॥ १००॥

अस्मद्गुरुगुरोः श्रौतसिद्धान्तविन्दुनामके ।
प्रबन्धे खण्डिता चैषा शङ्का चैवमेव हि ॥ १०१॥

ईशस्य चानिमित्तत्त्वे विरोध ईक्षणश्रुतेः ।
उभयकारणत्वं तत् सिद्धान्ते ब्रह्मणो मतम् ॥ १०२॥

सिद्ध्येच्चैकस्य विज्ञानात् सर्वस्य ज्ञाततऽपि च ।
प्रकृतिश्च प्रतिज्ञे त्यादिकं हि सूत्रितं ततः ॥ १०३॥

इति चेत् सावधानेन श्रूयतामुच्यते मया ।
एक विज्ञानतः सर्वविज्ञानं सम्मतं श्रुतौ ॥ १०४॥

अद्वैतिनां मते तद्धि कथचिन्नोपपद्यते ।

ब्रह्मैव तन्मते सत्यं मिथ्या ब्रह्मेतरद् यतः ॥ १०५॥

शुक्तौ रजतवद् भाति ब्रह्मण्यारोपितं जगत् ।
ज्ञाते ब्रह्मण्यधिष्ठाने न भाति शुक्तिरौप्यवत् ॥ १०६॥

सत्यं च कारणं ब्रह्म मृत्तिकासदृशं खलु ।
कार्यभूतं जगन्मिथ्या मृद्विकारघटादिवत् ॥ १०७॥

कार्यं बुद्धं भवेदत्रोपादानस्य च बोधतः ।
सत्यत्वमुभयोर्यद्वा मिथ्यात्वं सम्भवेद् यदि ॥ १०८॥

ब्रह्मज्ञानाज्जगज्ज्ञानमत्र स्यान्न कदाचन ।
ब्रह्मणः सत्यता चाथ मिथ्यात्वं जगतश्च यत् ॥ १०९॥

वेदान्ताच्च विरुद्धं तदद्वैतिनां मतं ततः ।
दोषो न सम्भवत्येष विशिष्टाद्वैतिनां मते ॥ ११०॥

क्षरं प्रधानमित्यादिश्रुतौ तत्त्वत्रयं श्रुतम् ।
प्रधानं क्षरमित्येकं द्वितीयममृताक्षरम् ॥ १११॥

उक्तोभयोर्नियन्ता हि तृतीयं तत्त्वमुच्यते ।
यस्यात्मा यस्य पृथिवी इत्येवं चिदचित्तथा ॥ ११२॥

ईशस्य देहरूपत्वात् प्रकारौ सम्मतावुभौ ।
उभाभ्यां च विशिष्टो हि सर्वेशो रघुनायकः ॥ ११३॥

चिदचिद्भ्यां च सूक्ष्माभ्यां विशिष्टः प्रलये हि सः ।
उपादानं हि विश्वस्य सर्वेशो राघवो मतः ॥ ११४॥

सदेव सोम्येदमग्र श्रुतेस्तत्र प्रमाणता ।
अद्वितीयमित्युक्तेश्च निमित्तं च स एव हि ॥ ११५॥

स्थूलाभ्यां चिदचिद्भ्यां च विशिष्टे तत्र कार्यता ।
बहुत्वावस्थया युक्तस्तदा रामः प्रकीर्त्तितः ॥ ११६॥

सूक्ष्माचिच्चिद्विशिष्टं तद् ब्रह्म कारणमुच्यते ।
स्थूलाचिच्चिद्विशिष्टं च ब्रह्म कार्यं मतं बुधैः ॥ ११७॥

एतयोर्ब्रह्मणोरैक्यं विशिष्टाद्वैतमुच्यते ।
कारणब्रह्मबोधाच्च कार्यं ब्रह्म हि बुध्यते ॥ ११८॥

विकारो जायते चाथ चिदचितोः प्रकारयोः ।
अक्षता च भवेत् तस्माद् ब्रह्मणो निर्विकारता ॥ ११९॥

चिदचिद्भ्यां विशिष्टत्वात् सङ्कल्पवत्तया तथा ।
उपादानं निमित्तं च सद् ब्रह्मैवोर्णनाभिवत् ॥ १२०॥

तदैक्षतेतिसङ्कल्पाद् गुणैर्वैशिष्ट्यहेतुतः ।
ब्रह्मणः सविशेषत्वं साधितं च भवेदपि ॥ १२१॥

एवं समीरितं चापि श्रुतानन्देन धीमता ।
रामस्योभयहेतुत्वमुपेयोपायवर्णने ॥ १२२॥

कार्यस्य ब्रह्मणो हेतुः कारणं ब्रह्म सम्मतम् ।
परिणामादितिसूत्रं सङ्गतं च भवेत् ततः ॥ १२३॥

सङ्गतिर्नास्य सूत्रस्य विदर्त्तवादिनां मते ।
विवर्त्तः परिणामो न दुग्धस्य दधिवद् यतः ॥ १२४॥

नाकल्पं मुच्यते जीवो बद्धश्च प्राकृतैर्गुणैः ।
श्रीरामं च प्रपन्नः स मुच्यते निर्गुणश्च सन् ॥ १२५॥

स तिष्ठति प्रकारः सन् स्वाधारे परमात्मनि ।
राम एवाचिदंशोऽपि प्रकारः सन् हि तिष्ठति ॥ १२६॥

श्रीरामे तु लये चोभौ तिष्ठतः सूक्ष्मरूपतः ।
अभावौ न हि विद्येते प्रलये चोभयोस्तयोः ॥ १२७॥

प्रलयः प्रोच्यते प्राज्ञैरव्यक्तत्वेन संस्थितिः ।
विद्वद्भिरुच्यते व्यक्तं स्थूलभावेन तूद्गमः ॥ १२८॥

भोक्तृभोग्यतया चाथ शरीरात्मतया खलु ।
अचिच्चिदाख्यतत्त्वे च विभिन्ने परमात्मनः ॥ १२९॥

श्रीरामपरतन्त्रे ते स्वतन्त्रो राघवस्तथा ।
प्रकारत्वादभिन्ने ते श्रीरामान्न स्वरूपतः ॥ १३०॥

चिदचितोः प्रकारत्वे सम्बन्धश्चापृथक्स्थितिः ।
तेन ताभ्यां विशिष्टः श्रीरामः सर्वेश्वरो मतः ॥ १३१॥

ब्रह्मसत्त्वे प्रमाणं च शास्त्रमेव सुनिश्चितम् ।
तन्त्वौपनिषदश्चैतच्छ्रुतिवाक्यप्रमाणतः ॥ १३२॥

कार्यत्वात् कृतिजन्यं नु विश्वं क्षित्यङ्कुरादिकम् ।
घटवच्चानुमानेन विश्वेऽस्ति कृतिजन्यता ॥ १३३॥

तादृशकृतिशालित्वमस्माकं सम्भवेन्न तत् ।
तादृशक्कृतिमत्त्वेन सिद्धो रामोऽखिलेश्वरः ॥ १३४॥

मैवं न गृह्यते यस्माद् व्याप्तिः साधनसाध्ययोः ।
ईशस्य तत्कृतेश्चापि यस्मादध्यक्षता न हि ॥ १३५॥

तन्त्वौपनिषदं चैवं ब्रह्मणः शास्त्रवेद्यता ।
सूत्रं च शास्त्रयोनित्वात् ततो व्यासेन सूत्रितम् ॥ १३६॥

वृद्धासकृत् प्रयोगाद्धि बालो वेत्ति मुखादिकम् ।
उपासनेऽन्वितं सिद्धं ब्रह्म श्रुत्या च बोध्यते ॥ १३७॥

वेदान्तिनः प्रभाषन्ते वेदान्ता ब्रह्मवाचकाः ।
प्रमाणं वर्त्तन्ते तत्र तन्त्वौपनिषदं श्रुतिः ॥ १३८॥

प्राभाकरा न मन्यन्ते वेदान्तिनामिदं वचः ।
कस्माच्चेदुच्यते यस्मात् कार्यता ब्रह्मणो न हि ॥ १३९॥

सर्वे शब्दाश्च वर्त्तन्ते कार्यार्थप्रतिपादकाः ।
शब्दानां नास्ति तात्पर्यं सिद्धार्थप्रतिपादने ॥ १४०॥

सिद्धकार्यविभेदाद्धि द्विधा चार्थाः समीरिताः ।
यत्नासाध्याः पदार्थास्तु सिद्धार्थाः समुदीरिताः ॥ १४१॥

घटोऽस्तीत्यादिवाक्येषु सिद्धार्था हि घटादयः ।
भवत्यत्र न व्युत्पत्तिस्तेषामाकर्णनात् खलु ॥ १४२॥

यत्नसाध्याः पदार्थास्तु कार्यभूता हि सम्मताः ।
कार्यभूता मताः प्राज्ञैः क्रियाश्च गमनादयः ॥ १४३॥

कार्ये तात्पर्यवन्तो हि शब्दा लौकिकवैदिकाः ।
शब्दो हि यत्परश्चास्ति शब्दार्थः स च एव हि ॥ १४४॥

कार्यमेव हि शब्दार्थस्तत एव हि मन्यते ।
सिद्धार्थो न तु शब्दार्थो यत्नसाध्यो यतो न सः ॥ १४५॥

नित्यसिद्धं परब्रह्म यत्नसाध्यं च नो हि तत् ।

औपनिषदशब्दार्थः सिद्धं ब्रह्म ततो न हि ॥ १४६॥

विध्यर्थवादमन्त्रेतिभेदाद् वेदस्त्रिधा मतः ।
वेदस्येमे त्रयो भेदाः कार्यार्थप्रतिपादकाः ॥ १४७॥

यजेतेत्यादिवाक्यानि विधयोऽभिहिताश्च हि ।
कुर्वन्ति संविधानं वै स्वर्गायापूर्वयागयोः ॥ १४८॥

एतैश्च विहितो यागोऽपूर्वश्च फलदायकः ।
यत्नसाध्यौ ततश्चेतौ कार्यत्वेन मतौ बुधैः ॥ १४९॥

स्तुत्यादिकारकाश्चार्थवादास्तथा तदन्विताः ।
देवादिस्मारका मन्त्राः पर्यवस्यन्ति तत्र च ॥ १५०॥

प्रमाणं च ततो वेदः कार्यार्थप्रतिपादकः ।
मीमांसा ब्रह्मणस्तस्माद् वेदान्तिनां हि निष्फला ॥ १५१॥

मीमांसकवचः श्रुत्वा वेदान्तिनो वदन्ति हि ।
कार्यमेव हि शब्दार्थश्चैतत् प्रमाणिकं कथम् ॥ १५२॥

कुर्वन्त्यत्र समाधानं प्रभाकरानुयायिनः ।
गामानयेति वाक्यं हि श्रुत्वा प्रेरकवृद्धतः ॥ १५३॥

व्युत्पित्सुः प्रेर्यवृद्धेन ह्यानीतां गां च पश्यति ।
अश्वमानय नय गामिति प्रेरकवाक्यतः ॥ १५४॥

गोर्नयनमथाश्वस्यानयनं च विलोक्य हि ।
तत्तद्गवादिशब्दानां तत्तद्गवादिवस्तुषु ॥ १५५॥

शक्तिग्रहसमर्थो हि व्युत्पित्सुश्च भवेदिह ।
कार्यमेव हि शब्दार्थस्ततश्चास्माभिरुच्यते ॥ १५६॥

कुर्वन्त्यत्र समाधानं विशिष्टाद्वैतवादिनः ।
प्रवर्त्तकस्य वृद्धस्य वाक्यप्रयोगमात्रतः ॥ १५७॥

शक्तिग्रहो भवत्येतन्मन्यते न विचक्षणैः।
चेष्टाकोशादितश्चापि शक्तिग्रहस्य दर्शनात् ॥ १५८॥

पूर्वं कार्यार्थव्युत्पत्तिर्बोधे जाते च त्यज्यते ।
शब्दार्थश्च मतोऽनन्यलभ्योऽर्थोऽत्र बुधैर्यतः ॥ १५९॥

श्रुतिवाक्यात् ततः सिद्धादर्थबोधो हि जायते ।
सिद्धशब्दार्थबोधस्य तस्मान्नानुपपन्नता ॥ १६० ॥

किञ्च सिद्धपराच्चापि वाक्याद् बोधश्च जायते ।
सन्देहवाहकाच्छ्रुत्वा जातश्चैत्र तत्रात्मजः ॥ १६१ ॥

चैत्रहर्षं ततो दृष्ट्वा व्युत्पित्सुरवगच्छति ।
श्रुतैतद्वाक्यजा चात्र हर्षस्य कारणं मतिः ॥ १६२ ॥

एवञ्च ब्रह्मशब्दाद्धि श्रोतात्तु ब्रह्मणो मतिः ।
किञ्चोपायान्तरेणात्र शक्तिग्रहो भवत्यपि ॥ १६३ ॥

अव्युत्पन्नाँश्च बालान् हि व्युत्पन्नान् कर्तुमिच्छुकाः ।
जननीजनकाद्याश्च स्वाभिश्चाङ्गुलिभिः खलु ॥ १६४ ॥

दिशन्तस्तत्तदर्थंश्च तत्तच्छब्दैः पुनः पुनः ।
सिद्धेष्वर्थेषु शब्दानां शक्तिं च ग्राहयन्ति हि ॥ १६५ ॥

कार्यार्थं एव शब्दानां शक्तिग्रहेऽपि सम्मते ।
सिद्धस्य ब्रह्मणो युक्ता मीमांसा ब्रह्मवादिनाम् ॥ १६६ ॥

कुतश्चेदुच्यते चात्र श्रोतव्यं सावधानतः।
ब्रह्मविदाप्नेति परमित्यस्ति वैदिकं वचः ॥ १६७ ॥

तद्वाक्यमनुसृत्यात्र विधिरूपं भवत्यदः।
ब्रह्मप्राप्तिकामः खलु ब्रह्मोपासीत मानवः ॥ १६८ ॥

पुमानत्राधिकारी हि ब्रह्मप्राप्तिसमिच्छुकः ।
ब्रह्मप्राप्तिसमिच्छा तत्राधिकारिविशेषणम् ॥ १६९ ॥

ब्रह्मावाप्तिश्च ब्रह्माथ कामनायां विशेषणे ।
प्राप्यं फलं परब्रह्म ब्रह्मोपासनकारिणः ॥ १७० ॥

तद्विशेषान् स्वरूपं च वदच्छ्रौतवचांसि हि ।
कार्ये चापेक्षितार्थस्य वाचकानि भवन्ति वै ॥ १७१ ॥

उपासनफलब्रह्मस्वरूपे बोद्धुमीप्सिते ।
यतो वेत्यादिश्रौतानि वाक्यनि कथयन्ति तत् ॥ १७२ ॥

जगज्जन्मादिकृद् रामः सर्वात्मा सर्वधारकः ।
सर्वेश्वरः परब्रह्म सर्वाराध्यश्च सर्वदः ॥ १७३ ॥

सर्वशक्तिश्च सर्वस्योपादानं च निमित्तकम् ।
सवेदेहश्च सर्वज्ञः कल्याणगुणसागरः ॥ १७४॥

विभुर्ज्ञानस्वरूपश्च स्वभक्त्या नित्यमुक्तिदः ।
परव्यूहादिभेदैश्च पञ्चधा पुरुषोत्तमः ॥ १७५॥

चिदचिद्भ्यां विशिष्टश्च कार्यकारणरूपकः ।
भगवान् दिव्यदेहश्च विभूतिद्वयनायकः ॥ १७६॥

वेदनेनेति सम्बद्धः फलत्वेन हि राघवः ।
कार्येऽपि वेदतात्पर्ये रामो ब्रह्म च सिध्यति ॥ १७७॥

व्युत्पत्त्यां च मतायां हि सिद्धे कार्येऽथवा खलु ।
वेदान्तिब्रह्मजिज्ञासा सफलैव न निष्फला ॥ १७८॥

प्राभाकरनिरासे हि श्यामानन्देन निर्मिते ।
सिद्धस्य ब्रह्मणश्चैवं बोध्यता सुनिरूपिता ॥ १७९॥

प्रधानं न हि सद्वाच्यं सदेवेतिश्रुतौ मतम् ।
तदैक्षतेतिसम्प्रोक्तमीक्षणं तत्र नो यतः ॥ १८०॥

आत्माऽऽन्दमयश्चात्र ब्रह्मानन्दमयो मतः ।
आनन्दमयशब्दस्य तत्रैवाभ्यासदर्शनात् ॥ १८१॥

य एषोऽन्तरादित्ये प्रोक्तः पुमान् हिरण्मयः ।
ब्रह्मधर्मोक्तितो ब्रह्मह्यादित्यान्तर्गतः स च ॥ १८२॥

शरीरित्वान्न जीवोऽयं कुतश्चेदुच्यते यतः ।
आदित्यादेर्नियन्ताऽयं बृहदारण्यके श्रुतः ॥ १८३॥

अस्य लोकस्य इत्यादावाकाशो ब्रह्म वै यतः ।
ब्रह्मणः सर्वभूतानां हेतुतालिङ्गदर्शनात् ॥ १८४॥

प्राण इति हो वाचात्र ब्रह्मणः प्राणवाच्यता ।
ब्रह्मणोऽखिलभूतानां हेतुत्वलिङ्गदर्शनात् ॥ १८५॥

अतः परो दिवो ज्योतिरत्र ज्योतिः पदेन हि ।
चरणोक्तेश्च सम्प्रोक्तं ब्रह्मैवेतिविनिश्चयः ॥ १८६॥

स होवाच प्राणोऽस्मीतिप्राणो ब्रह्मेति सम्मतः ।

यतोऽत्र ब्रह्मणः सर्वेश्वरत्वादिर्हि दृश्यते ॥ १८७॥

उपास्यो राघवो ब्रह्म छन्दोग्ये हि मनोमयः ।
यतो मनोमयत्वाद्या गुणास्तस्य श्रुतिश्रुताः ॥ १८८॥

यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः ।
अत्र चात्ता परब्रह्म सर्वस्यादनता यतः ॥ १८९॥

सह जीवात्मना रामः प्रविष्टो हृद्गुहामिह ।
अङ्गुष्ठप्रमितश्चाथ भूतभव्यनियामकः ॥ १९०॥

पाययितरि रामे च पातृत्वस्योपचारतः ।
उभावृतं पिबन्तौ च श्रुतौ हि परिकीर्त्तितौ ॥ १९१॥

अन्तरक्षिणि पुरुषो श्रीमद्राम उदीरितः ।
अमृतत्वाभयत्वादि गुणानामुपपत्तितः ॥ १९२॥

अन्तर्याम्यधिदैवादावन्तर्यामितया श्रुतः ।
सर्वात्मत्वनियन्तृत्वादेरुक्तत्वाद्धि राघवः ॥ १९३॥

अथ परा ययेत्यस्यामादृश्यत्वादिधर्मकः ।
सर्वज्ञतादिधर्माणामुक्त्या रामोऽखिलेश्वरः ॥ १९४॥

इमं वैश्वानरं चात्र रामो वैश्वानरो मतः ।
वैश्वानरस्य मूर्धैव सुतेजा इतिरूपतः ॥ १९५॥

साधारणैश्च धर्मैर्यद्वैश्वानरो विशेषितः ।
द्युमूर्धत्वादिधर्माणां श्रीरामे सम्भवोऽपि च ॥ १९६॥

यस्मिन् द्यौः पृथिवीत्यत्र रामो ह्यात्मतया श्रुतः ।
प्रोक्ताश्च हेतवो यस्मादमृतसेतुतादयः ॥ १९७॥

सर्वोत्कृष्टगुणो रामो यो वै भूमेत्युदीरितः ।
जीवादूर्ध्वोपदेशो हि कारणं तत्र मन्यते ॥ १९८॥

तदक्षरं गार्ग्येतस्मिन् वाक्येऽक्षरं हि राघवः ।
अम्बरान्तधृतिश्चैतन्मन्तव्यस्य तु कारणम् ॥ १९९॥

परमः पुरुषो रामः त्रिमात्रेणोमिति श्रुतौ ।
ईक्षणविषयत्वेन व्यपदेशश्च तस्य यत् ॥ २००॥

अस्मिन् ब्रह्मपुरे चैतच्छ्रुतिवाक्ये समीरितः ।
श्रीरामो दहराकाशो वाक्यशेषगहेतुतः ॥ २०१॥

अङ्गुष्ठमात्र इत्यादावङ्गुष्ठप्रमितो मतः ।
भूतभव्यस्य चेशानः श्रीरामः परमेश्वरः ॥ २०२॥

प्राण एजति वाक्ये च प्राणवाच्यश्च राघवः ।
प्राणस्य प्राणमित्युक्त्या सर्वस्य कम्पनात् तथा ॥ २०३॥

परं ज्योतिरूपं चात्र रामो ज्योतिष्पदेरितः ।
ज्योतिषां ज्योतिरित्यत्र ज्योतिर्वाच्यत्वदर्शनात् ॥ २०४॥

आकाशो हेति छान्दोग्ये ह्याकाशो रामवाचकः ।
नाम रूपेतरत्वेन ब्रह्मत्वव्यपदेशतः ॥ २०५॥

राम एवं परं ब्रह्म राम एव परं तपः ।
राम एव परं तत्त्वं श्रीरामो ब्रह्मतारकम् ॥ २०६॥

रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि ।
इति रामपदेनासौ परब्रह्माभिधीयते ॥ २०७॥

अक्षरं ब्रह्म सत्यं च मध्ये चान्ते च राघवः ।
रामः सत्यं परं ब्रह्म रामात् किञ्चिन्न विद्यते ॥ २०८॥

श्रुतिस्मृत्योरिति ब्रह्मश्रीरामो विभुचेतनः ।
सकृदेव प्रपत्त्या यः सर्वाभयप्रदायकः ॥ २०९॥

गुणाब्धिः सत्यसङ्कल्पो जगजन्मादिकारणम् ।
सच्चिदानन्दरूपश्च रामो ब्रह्म श्रुतीरितम् ॥ २१०॥

गुणैश्चाथ स्वरूपेण बृहत्वं परमं गतः ।
ब्रह्मवाच्यस्ततो रामः सर्वावस्थासु सम्मतः ॥ २११॥

आत्मत्वाच्च परत्वात् स परमात्मेति कीर्त्तितः ।
वेवेष्टि यज्जगत् सर्वं तत् स विष्णुतयेरितः ॥ २१२॥

अणोरणीयान् महतो महीयान् राघवो मतः ।
द्वन्द्वशून्योऽनवच्छिन्नरचानादिनिधनः प्रभुः ॥ २१३॥

यत्र नायं भवेत् तादृग् देशो नास्ति हि कुत्रचित् ।
अतो देशपरिच्छेदः श्रीरामस्य न विद्यते ॥ २१४॥

यत्र नायं भवेत् तादृग् कालो नास्ति हि कुत्रचित् ।
अतः कालपरिच्छेदः श्रीरामस्य न विद्यते ॥ २१५॥

येन चास्य परिच्छेदस्तादृग् वस्तु न कुत्रचित् ।
अतो वस्तुपरिच्छेदः श्रीरामस्य न विद्यते ॥ २१६॥

अयं निराश्रयो यस्माच्चाश्रयो नास्य कोऽपि तत् ।
निराश्रयाश्रयः किन्तु कश्चिन्नास्तिं हि रामवत् ॥ २१७॥

विश्वप्रवर्त्तको रामो नास्य कश्चित् प्रवर्त्तकः ।
रामः सर्वेश्वरः कश्चिद् रामस्य चेश्वरो न हि ॥ २१८॥

सर्वात्मा हि मतो रामो रास्यात्मा न कोऽपि च ।
रामदेहो जगत् सर्वं रामो देहो न कस्यचित् ॥ २१९॥

सर्वशेषी मतो रामो रामशेषी न कोऽपि हि ।
रामशेषो जगत् सर्वं रामः शेषो न कस्यचित् ॥ २२०॥

सर्वेभ्यश्च परो रामो रामात् तत्त्वं परं न हि ।
रामश्चादिर्हि सर्वेषां रामस्यादिर्न कस्यचित् ॥ २२१॥

विश्वस्य कारणं रामो रामस्य कारणं न हि ।
सर्वेषां शरणं रामो रामस्य शरणं न च ॥ २२२॥

सर्वाराध्यश्च रामो हि रामः सर्वफलप्रदः ।
स्वस्य भक्त्या प्रपत्त्या च श्रीरामो मुक्तिकारकः ॥ २२३॥

दिव्याकारयुतो रामः साकारः सम्मतस्ततः ।
प्राकृताकारशून्यत्वान्निराकारश्च कीर्त्तितः ॥ २२४॥

कल्याणगुणवत्त्वेन श्रीरामः सगुणो मतः ।
प्राकृतगुणशून्यत्वान्निर्गुणश्च प्रकीर्त्तितः ॥ २२५॥

भर्त्ता भोक्ता च सर्वेषां भास्करादेश्च भासकः ।
रामश्चैको हि सर्वेषु स्थितः काष्ठेषु वह्निवत् ॥ २२६॥

भावयेद् वैष्णवो वृन्दामालोर्ध्वपुण्ड्रधारकः ।
दीक्षितो राममन्त्रेण रामं साध्यं च साधनम् ॥ २२७॥

प्राप्यो मुमुक्षुभी रामो भक्तितश्च प्रपत्तितः ।

नित्यैर्मुक्तैश्च नित्यं हि स्तुतोऽर्चितश्च सेवितः ॥ २२८॥

विच्छेदरहिता प्रीत्या भक्ती रामस्य संस्मृतिः ।
या बोधायनसम्प्रोक्ताज्जाता साधनसप्तकात् ॥ २२९॥

श्रीरामस्यानवच्छिन्नं स्मरणं प्रीतिपूर्वकम् ।
श्रीमद्वैष्णवाचार्यैर्भक्तियोगतया मतम् ॥ २३०॥

अङ्गमष्टाङ्गयोगोऽङ्गी भक्तियोगः प्रकीर्तितः ।
लभ्यते भगवान् रामो भक्तियोगेन नान्यथा ॥ २३१॥

भक्तिर्बोधायनप्रोक्तैर्विवेकादिकसाधनैः ।
ध्यानध्रुवस्मृतीत्यादिशब्दवाच्या प्रजायते ॥ २३२॥

संसारिता मताऽभक्त्या भक्त्या मुक्तिरुदीरिता ।
आमृत्युसमयं भक्तेरावृत्तिश्च मता श्रुतौ ॥ २३३॥

प्रारब्धान्ते मता भक्तिर्मुक्तिदा चार्चिरादिना ।
अङ्गिनी च मता भक्तिरङ्गे च ज्ञानकर्मणी ॥ २३४॥

श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ २३५॥

एवं महापुराणे श्रीभागवते हि मुक्तिदा ।
भक्तेश्च नवधा भेदाः प्रह्लादेन प्रकीर्त्तिताः ॥ २३६॥

एभिराराधितो रामो भक्ते परं प्रसीदति ।
योगक्षेमं वहँल्लोके चान्ते मुक्तिं प्रयच्छति ॥ २३७॥

घृतं जलात् तथा तैलं सिकतातश्च निःसरेत् ।
तथाऽपि भगवद्भक्तिं विना मुक्तेर्न सम्भवः ॥ २३८॥

पूर्वाघनाशिनी चाथ पराघश्लेषवर्जिनी ।
भक्तिरेव ततः सैव पुसां संसारनाशिनी ॥ २३९॥

एवं भक्तिः समाख्याता प्रबन्धे योगपञ्चके ।
श्रीप्रमिताक्षराकारदेवानन्दार्यनिर्मिते ॥ २४०॥

रामस्य ब्रह्मणोऽनन्यभक्त्यैव मुक्तिराप्यते ।
भक्तिर्ध्रुवा स्मृतिः सा च विवेकादिकसप्तकात् ॥ २४१॥

जात्याश्रयनिमित्तैर्यद् दुष्टमन्नं भवेन्न हि ।
तस्माद् देहस्य संशुद्धिर्विवेकः कथ्यते बुधैः ॥ २४२॥

शब्दरूपरसंस्पर्शगन्धेषु विषयेषु यः ।
अनादरः स तत्त्वज्ञैर्विमोकः परिकीर्त्तितः ॥ २४३॥

शुभाश्रयस्य यच्चात्र संशीलनं पुनः पुनः ।
अभ्यासः साधनं तद्धि योगव्यानोपकारकम् ॥ २४४॥

यथाशक्ति हि पञ्चानां यज्ञानां महतां तथा ।
आश्रमान्तरधर्माणामनुष्ठानं क्रिया मता ॥ २४५॥

अहिंसा चानभिध्या च सत्यार्जवे तथा दया ।
दानं चैतानि कल्याणतयाम्नातानि सूरिभिः ॥ २४६॥

शोकभीतिनिमित्तेनावसादश्चित्तदीनता ।
तदभावो हि सम्प्रोक्तोऽनवसादो महात्मभिः ॥ २४७॥

उद्धर्षः खलु सन्तोषोऽनुद्धर्षस्तद्विपर्ययः ।
शोकवच्चातिसन्तोषे मनःशैथिल्यहेतुता ॥ २४८॥

साधनदीपिकायां चैतादृक् साधनसप्तकम् ।
श्रीबोधायनवृत्तिस्थं गङ्गाधरेण वर्णितम् ॥ २४९॥

अनन्यचेतसा सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ २५०॥

तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिः स्पृहा ।
तद्ध्यानं प्रथमैः षड्भिरङ्गैर्निष्पाद्यते तथा ॥ २५१॥

उपासनस्य चावृत्तिं वदन्ति स्मृतयास्त्विति ।
उपास्यः स्वात्मरूपेण रामस्तूपासकैः सदा ॥ २५२॥

चित्तस्यैकाग्रता यत्र तत्रोपास्यस्तु राघवः ।
उपासनं च कर्त्तव्यमासीनेन जनेन हि ॥ २५३॥

यथाक्रतुनयाद् भक्तो ज्ञातृत्वरूपतामिव ।
अपहताघतां चापि स्वस्वरूपस्य चिन्तेयत् ॥ २५४॥

ससीताय च रामाय यच्च स्वात्मसमर्पणम् ।
तत् प्रपत्तितया प्रोक्तमाचार्यवासवैः शुभम् ॥ २५५॥

नावाप्यते परं धाम तपोयोगसमाधिभिः ।
सकृद्रामप्रपत्त्यैव प्राणिभिः प्राप्यते हि तत् ॥ २५६॥

तापत्रयाभितप्तेन गतिशून्यजनेन हि ।
पुरुषोत्तमरामस्य दयाब्धेः सन्निधौ कृता ॥ २५७॥

त्वमेवोपायभूतो में भवेति प्रार्थना च या ।
तत्पूर्वकात्मनिक्षेपः प्रपत्तित्वेन सम्मतः ॥ २५८॥

विशेषणांशमादाय स एव शरणागतिः ।
अथादृत्य विशेष्यांश न्यासवाच्यः स एव हि ॥ २५९॥

उक्तं च न्यासतत्त्वज्ञैर्न्यासस्यास्याङ्गपञ्चकम् ।
अनायासेन बोधाय सङ्क्षेपेण तदुच्यते ॥ २६०॥

आनुकूल्यस्य सङ्कल्पस्तत्र चाद्याङ्गमुच्यते ।
आश्रयस्यानुवृत्तौ हि सङ्कल्पोऽत्र विधीयते ॥ २६१॥

उक्तमङ्गं द्वितीयं हि प्रातिकूल्यस्य वर्जनम् ।
क्रियते न प्रपन्नेन यत्र शास्त्रेण वर्जितम् ॥ २६२॥

रक्षिष्यतीति विश्वासो न्यासाङ्गं हि तृतीयकम् ।
स्वरक्षासंशयो यत्र सर्वथा परिवर्जितः ॥ २६३॥

न्यासस्याङ्गं चतुर्थं तु गोप्तृत्ववरणं मतम् ।
तत् त्राता मे त्वमेव स्याः इत्येवं प्रार्थनात्मकम् ॥ २६४॥

उदारः सर्वविच्चाथ सर्वशक्तिश्च राघवः ।
रक्षणे रक्षणीयस्य रक्षापेक्षामपेक्षते ॥ २६५॥

न्यासस्य पञ्चमं त्वङ्ग कार्पण्यं समुदीरितम् ।
प्रपन्नस्यान्वयो यत्रोपायान्तरेषु वर्जितः ॥ २६६॥

श्रीमद्रामं प्रपन्नाश्च ध्यानयोगं विनाऽपि वै ।
मृत्युसिन्धुमतिक्रम्य चामृतत्वं प्रयान्ति हि ॥ २६७॥

सरलः सुगमश्चाथ सकृत् कार्योऽनपेक्षकः ।
यतस्ततोऽयमन्यस्मान्न्यासः श्रेष्ठतमो मतः ॥ २६८॥

त्यक्त्वोपायान्तरं मुक्त्यै कार्यो न्यासससमाश्रयः ।

सर्वेभ्यो चाभयं दत्ते रामः सकृत् प्रपत्तितः ॥ २६९॥

सर्वेषां प्राणिनां चात्र प्रपत्तावधिकारिता ।
जनाश्चेशं प्रपद्यैव मायां तरन्ति दुस्तराम् ॥ २७०॥

न्यासो दृप्तप्रपन्नानां देहान्तरनिवारकः ।
आर्त्तानां च स एवाशु मुक्तिदो हि सकृत् कृतः ॥ २७१॥

अस्मद्गुरुवरैश्चैवं श्रीचिदानन्ददेशिकैः ।
प्रपत्तेः सत्स्वरूपं हि प्रोक्तं न्यासकलानिधौ ॥ २७२॥

रामायत्तस्थितित्वाच्च सर्वस्मिन् रामदेहता ।
सामानाधिकरण्यं तद् रामे सर्वस्य भासते ॥ २७३॥

प्रमाणलक्षणाभ्यां च वस्तुसिद्धिर्हि मन्यते ।
निर्विशेषे द्वयाभावात् तादृग् ब्रह्म न सिध्यति ॥ २७४॥

रामः प्रकृतिभिन्नोऽस्ति सत्वादिरहितो यतः ।
चेतनत्वाजडत्वाभ्यां सर्वदेहितया तथा ॥ २७५॥

चेतनत्वाजडत्वाभ्यां रामेऽस्ति कालभिन्नता ।
प्रत्यक्त्वाच्चेतनत्वाच्च शुद्धसत्वं न राघवः ॥ २७६॥

तत एव च श्रीरामो ज्ञानभिन्नो मतो बुधैः ।
रामश्चाद्रव्यभिन्नोऽस्ति तत्रास्ति द्रव्यता यतः ॥ २७७॥

सर्वेशत्वाद् विभुत्वाच्चाकर्माधीनतया तथा ।
जगज्जन्मादिहेतुत्वाद् रामे जीवविभिन्नता ॥ २७८॥

ईशानो भूतभव्यस्य श्रुतौ रामोऽखिलेश्वरः ।
जीवभिन्नतथा चोक्तौ गीतायां पुरुषोत्तमः ॥ २७९॥

शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ।
कर्मानधीनता चेशे गीतायामिति भाषिता ॥ २८०॥

प्रमाणाभावतो रामस्येश्वरत्वं न मायिकम् ।
मायिकी न तथा रामे जगजन्मादि हेतुता ॥ २८१॥

परो व्यूहश्च विभवोऽन्तर्याम्यर्चावतारकः ।
पञ्चधावस्थितः चैवं श्रीरामः सकलेश्वरः ॥ २८२॥

अप्राकृतेऽजडे नित्येऽव्यये च तमसः परे ।
यद् गत्वा न निवर्त्तन्ते तस्मिन् श्रीरामधामनि ॥ २८३॥

मुक्तात्मनां च नित्यानां तथा श्रीरामसीतयोः ।
भोगस्थाने च भोग्ये च भोगोपकरणात्मके ॥ २८१॥

राघवस्य प्रपत्त्या वा भक्त्या प्राप्येऽर्च्चिरादिना ।
रम्यकल्पद्रुमारामप्रमोदवनभूषिते ॥ २८५॥

सरयूमणिशैलाभ्यां शोभिते नित्यधामनि ।
शुद्धसत्वमये दिव्ये साकेते च परात्परे ॥ २८६॥

दिव्यैश्च द्वारपालैश्च मण्डिते चाङ्गदादिभिः ।
अयोध्यानगरेऽयोध्ये सर्वभीतिविवर्जिते ॥ २८७॥

ब्रह्महर्म्याङ्गणे रम्येऽनन्तसूर्यप्रभान्विते ।
कल्पतरुतले दिव्यपुष्पास्तीर्णे मनोहरे ॥ २८८॥

चन्द्रोपमवितानस्याधस्ताद्धैमे धरातले ।
दिव्यमाणिक्यवेद्यां च रत्नसिंहासने शुभे ॥ २८९॥

सेवितश्चाञ्जनेयाद्यैर्नित्यैर्मुक्तैश्च संस्तुतः ।
पालकः सर्वलोकानां सर्वलोकैककारणम् ॥ २९०॥

परिपूर्णतमं ब्रह्म कलेशः क्लेशवर्जितः ।
अंशी सर्वावतारी च सर्वेशः श्रुतिदर्शितः ॥ २९१॥

दिव्यसुवर्णसद्दण्डच्छत्रचामरधारिभिः ।
वस्त्रभूषाऽऽवृतैर्भव्यैरावृतो नित्यपार्षदैः ॥ २९२॥

नीलम्बुजसमः श्यामो कुञ्चितश्यामकुन्तलः ।
कप्यासपुण्डरीकाक्षः शारदेन्दुनिभाननः ॥ २९३॥

दिव्यपरिच्छदो दिव्यो दिव्यशस्त्रास्त्रधारकः ।
सच्चिदानन्ददेहश्च दिव्यभूषणभूषितः ॥ २९४॥

मुक्तिदश्च मुमुक्षूणां ध्यानार्चावन्दनादिभिः ।
पादपद्माश्रयात् सर्वदुःखहृत् सुखकृत् तथा ॥ २९५॥

सर्वज्ञः सर्वछक्तिश्च सर्वदेहश्च सर्वगः ।
सर्वविद्यासु चाराध्यः सर्वस्य जगतो गुरुः ॥ २९६॥

दिव्यगन्धानुलिप्ताङ्गो कल्याणगुणवारिधिः ।
अभिरामः परो रामः शोभितः सीतया सह ॥ २९७॥

सर्वावतारमूलं स दीपोत्पादकदीपवत् ।
उपास्यश्चाश्रयश्चाथ सर्वेषामभिरक्षकः ॥ २९८॥

स्वानुरूपश्च नित्यश्च श्रीमद्रामस्य विग्रहः ।
अवयवैरनारब्धो वृद्धिक्षयादिवर्जितः ॥ २९९॥

माणिक्यपेटिकावत् स स्वरूपस्य प्रकाशकः ।
शुद्धसत्वमयो दिव्यो प्राकृतत्वं न तस्य हि ॥ ३००॥

सर्वातिशायितेजस्वी श्रेयोगुणगणार्णवः ।
नित्यमुक्तानुभाव्यः सोऽनुसन्धेयश्च योगिनाम् ॥ ३०१॥

मोहकः स च सर्वेषां दिव्यमण्डनमण्डितः ।
दिव्यरूपविशिष्टः स दिव्यवस्त्रास्त्रशोभितः ॥ ३०२॥

राम एवं परं ब्रह्म राम एवं परं तपः ।
परता ब्रह्मता चेति रामे हनुमतेरिता ॥ ३०३॥

व्याप्तिक्रान्तिप्रवेशेच्छास्तत्तद्धातुनिबन्धनाः ।
परत्वद्योतिकाः विष्णोर्देवस्य परमात्मनः ॥ ३०४॥

व्याप्नोति देशकालाभ्यां सर्वं यद् रूपतोऽपि च ।
तत्परं गदितं सद्भिर्विषेर्धातोर्निरूपणात् ॥ ३०५॥

कान्तिर्नाम गुणोत्कर्षो गुणा ज्ञानबलादयः ।
अतिवेलं प्रकृष्यन्ते यत्र कान्तः स ईरितः ॥ ३०६॥

अकान्ताश्चेतनाः सर्वे कान्तः स पुरुषः परः ।
कान्तिर्नाम गुणः सोऽयं वदेर्धातोनिरूपणात् ॥ ३०७॥

चेतनाचेतनाः सर्वे विशन्त्येव यतः स्वयम् ।
महीयांस विशत्येव योऽणीयानणुषु स्वयम् ॥ ३०८॥

स परो गदितः सद्भिर्विषेर्धातोर्निरूपणात्।
य इष्यते सदा सर्वैरात्मभावेन चेतनैः ॥ ३०९॥

स परो गदितः सद्भिरिषेर्धातोर्निरूपणात् ।

अहिर्बुध्न्यसंहितायामीशस्य परतात्त्विति ॥ ३१०॥

जगत्पूज्या जगद्वन्द्या मुक्तिदा जगदीश्वरी ।
जगद्देहा जगन्माता जगद्धेतुश्च भूमिजा ॥ ३११॥

विद्युदाभा दयाम्भोधिः सच्चिदानन्दविग्रहा ।
नित्यमुक्तसमाराध्या दिव्यवस्त्रैरलङ्कृता ॥ ३१२॥

विभ्वी सर्वेश्वरी सीता दिव्यभूषणभूषिता ।
रामाभिन्नाऽतिरम्या चार्चनीया रामवल्लभा ॥ ३१३॥

ममापराधवृन्दाँश्च रामचन्द्रस्वतन्त्रताम् ।
संविनाश्य च सीताम्बा प्राप्याथ स्वामिनी परा ॥ ३१४॥

कारुण्यसिन्धुरामस्य कारुण्यादींश्च सद्गुणान् ।
समुद्बोध्य च सम्प्राप्तां मम पुरुषकारताम् ॥ ३१५॥

अनुग्रहमयीं देवीं निग्रहेण च वर्जिताम् ।
श्रीसीतां चिन्तयेदेवं श्रीरामशरणागतः” ॥ ३१६॥

इत्येवं नवरत्न्यां हि श्रीसीताम्बा निरूपिता ।
सिद्धान्तभूषणेन श्रीश्यामानन्देन धीमता ॥ ३१७॥

वेदवेद्यौ च सद्वन्द्यौ सीतारामौ परात्परौ ।
अनन्यभक्तिसम्प्राप्यो प्रपन्नजनरक्षकौ ॥ ३१८॥

ईश्वरः सर्वभूतानामादिकारणमुच्यते ।
सर्वज्ञ ज्ञानशक्त्यादिकल्याणगुणभूषितः ॥ ३१९॥

धर्मार्थकाममोक्षाणां प्रदाता रघुनन्दनः ।
दिव्यविग्रहसंयुक्तोऽनन्तानन्दोजगत्पतिः ॥ ३२०॥

यद्यप्यार्त्तिहरो रामो ह्यन्तर्यामी महाप्रभुः ।
तथाप्यात्मकृतैः कार्यैर्न कदापि स बध्यते ॥ ३२१॥

यथा बाल्याद्यवस्थाभिर्न जीवो दूष्यते क्वचित् ।
तथाऽन्तश्चरमाणोऽपि न भवेद् दूषितो हरिः ॥ ३२२॥

परव्यूहादिभेदेन विज्ञेयः स च पञ्चधा ।
बहुभिर्द्वारपालैश्च कोट्टपालैश्च संयुतः ॥ ३२३॥

महामणिसमाकीर्णे मण्डपे च विराजितः ।
शोभया परया युक्तः किरीटमुकुटादिभिः ॥ ३२४॥

महाराज्ञ्या च जानक्या भूनीलाभ्यां च सेवितः ।
सङ्कर्षणश्च प्रद्युम्नोऽनिरुद्ध इति भेदतः ॥ ३२५॥

विज्ञेयश्च तथा व्यूहो जगत्सृष्ट्यादिकारकः ।
पूर्णो ज्ञानबलाभ्यां च सङ्कर्षणः इति स्मृतः ॥ ३२६॥

वीर्यैश्वर्ययुतस्तत्र प्रद्युम्न इति कथ्यते ।
शक्तितेजो विशिष्टस्तु ह्यनुरुद्ध इतीरितः ॥ ३२७॥

तत्तत्साजात्यरूपेण ह्याविर्भावः परस्य वै ।
विभवः स च विज्ञेयो मुख्यो गौणश्च स द्विधा ॥ ३२८॥

उपास्यः पुरुषैर्मुख्यो न च गौणः कदाचन ।
सर्वत्र सर्वदा यस्तु जीवाँस्त्यक्तुं न च क्षमः ॥ ३२९॥

अन्तर्यामी स विज्ञेयो जीवदोषैरदूषितः ।
देशकालादिनियमै रहितः स सहाप्रभुः ॥ ३३०॥

धातुपाषाणकाष्ठादिकृतविग्रहमाश्रितः ।
श्रीरामः स परं ब्रह्म जानक्या सहितः प्रभुः ॥ ३३१॥

अर्चावतारो विज्ञेयः कृपाशीलो गुणाम्बुधिः ।
एवं पञ्चप्रकारेण ह्येकोऽपि स महाप्रभुः ॥ ३३२॥

विभक्तो भगवान् रामः सर्वलोकैकरक्षकः ।
सेवितः परया भक्त्या सन्तुष्टः स हरिस्तदा ॥ ३३३॥

स्वाश्रितेभ्यश्च दासेभ्यः सायुज्यं सम्प्रयच्छति ।
श्रीवाल्मीकिसंहितायामेवं रामो हि पञ्चधा ॥ ३३४॥

व्यूहस्वरूपं ः
व्यक्तं च पूर्णषाड्गुण्यं वर्त्तते यत्र सर्वदा ।
परिपूर्णः स विज्ञेयो ब्रह्म रामः परात्परः ॥ ३३५॥

श्रीरामाद्धि चतुर्व्यूहाः प्रादुर्भूता भवन्ति हि ।
वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ॥ ३३६॥

व्यूह्यात्मानं चतुर्धा च वासुदेवादि मूर्तिभिः ।

सृष्ट्यादीन् प्रकरोत्येष विशुद्धात्मा जनार्दनः ॥ ३३७॥

एवं विष्णुपुराणेऽपि सृष्ट्यादिसंविधायकाः ।
ब्रह्मणो रामचन्द्राद्धि चतुर्व्यूहाः प्रकीर्त्तिताः ॥ ३३८॥

वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ।
इत्याद्यन्यतमः शास्त्रे व्यूहो हि सम्प्रकीर्त्तितः ॥ ३३९॥

तेष्वाद्यो वासुदेवो हि हीनः स प्राकृतैर्गुणैः ।
ततोऽसौ निर्गुणः प्रोक्तः षड्गुणैः सगुणोऽपि सः ॥ ३४०॥

प्रधानक्षेत्रज्ञपतिर्वासुदेवः श्रुतौ श्रुतः ।
स गुणानामधिष्ठाता बन्धमुक्तिप्रदो मतः ॥ ३४१॥

ततो जीवाभिमानी हि सङ्कर्षणः प्रजायते ।
सङ्कर्षणस्तदाऽऽश्रित्य प्राकृतं हि तमोगुणम् ॥ ३४२॥

संहरते जगत् सर्वं शिवो भूत्वा बलेन सः ।
स्वस्य ज्ञानगुणेनाथ सच्छास्त्रं वितनोत्यपि ॥ ३४३॥

ततो मनोभिमानी हि प्रद्युम्नः सम्प्रजायते ।
समाश्रित्य तदाऽयं तु प्राकृतं च रजोगुणम् ॥ ३४४॥

विश्वकृद् ब्रह्मतां गत्वा स्वस्यैश्वर्यगुणेन हि ।
प्रवर्त्तयति धर्मांश्च वीर्येण सात्विकानथ ॥ ३४५॥

अहङ्काराभिमानी चानिरुद्धो जायते ततः ।
तदानीं स समाश्रित्य सत्वं च प्राकृतं गुणम् ॥ ३४६॥

विष्णुर्भूत्वाऽखिलं विश्वं शक्त्या पाति विभर्त्ति च ।
स्वतत्त्वं स्वगुणेनाथ तेजसा ज्ञापयत्यसौ ॥ ३४७॥

वासुदेवात् सङ्कर्षण इत्याद्यागमवाक्षु हि ।
सङ्कर्षणे न जीवत्वं किन्तु जीवाभिमानिता ॥ ३४८॥

स ह्यनादिरनन्तश्च परमार्थेन निश्चितः ।
इति तस्यां संहितायां जीवोत्पत्तेर्निषेधनात् ॥ ३४९॥

सङ्कर्षणात् प्रद्युम्नसंज्ञं मनश्चेतिवाचि च ।
प्रद्युम्नो न मनः किन्तु तत्र मनोऽभिमानिता ॥ ३५०॥

करणात्मकं मनो यस्मात् कर्तुर्नोत्पद्यते खलु ।
प्रद्युम्ननादनिरुद्धसंज्ञकोऽहङ्कार इत्यपि ॥ ३५१॥

अहङ्काराभिमानीत्यनिरुद्धं सम्ब्रवीति हि ।
कदापि मनसश्चात्र नाहङ्कारसमुद्भवः ॥ ३५२॥

ततः सङ्कर्षणादीनां न जीवाद्यभिधायिता ।
किन्तु जीवाद्यधिष्ठातृतत्तद्व्यूहस्वरूपता ॥ ३५३॥

तत्र ज्ञानबलद्वन्द्वाद् रूपं साङ्कर्षणं हरेः ।
भगवानच्युतोऽपीत्थं षाड्गुण्येन समेधितः ॥ ३५४॥

बलज्ञाने गुणौ तस्य स्फुटौ कार्यवशान्मुने ।
बलेन हरतीदं स गुणेन निखिलं मुने ॥ ३५५॥

ज्ञानेन तनुते शास्त्रं सर्वसिद्धान्तगोचरम् ।
वेदशास्त्रमितिख्यातं पाञ्चरात्रं विशेषतः ॥ ३५६॥

ऐश्वर्यवीर्यसम्भेदाद् रूपं प्रायुम्नमुच्यते ।
ऐश्वर्येण गुणेनासौ सृजते तच्चराचरम् ॥ ३५७॥

वीर्येण सर्वधर्मांश्च प्रवर्त्तयति सर्वशः ।
शक्तितेजःसमुत्कर्षादनिरुद्धतनुर्हरेः ॥ ३५८॥

शक्त्या जगदिदं सर्वमनन्ताण्डं निरन्तरम् ।
विभर्त्ति पाति च हरिर्मणिसानुरिवाणुकम् ॥ ३५९॥

तेजसा निखिलं तत्त्वं ज्ञापयत्यात्मनो मुने ।
विष्वक्सेनसंहितायामेवं व्यूहा हि वर्णिताः ॥ ३६०॥

वासुदेवः सङ्कर्षणः प्रद्युम्नः पुरुषः स्वयम् ।
अनिरुद्ध इति ब्रह्मन् मूर्त्तिर्व्यूहोऽभिधीयते ॥ ३६१॥

स विश्वस्तैजसः प्राज्ञस्तुरीय इतिवृत्तिभिः ।
अर्थेन्द्रियाशयज्ञानैर्भगवान् परिभाष्यते ॥ ३६२॥

अङ्गोपाङ्गायुधाकल्पैर्भगवान् तच्चतुष्टयम् ।
विभर्त्ति स चतुर्मूर्त्तिर्भगवान् हरिरीएश्वरः ॥ ३६३॥

श्रीमद्भागवते चैवं चतुर्व्यूहाः प्रकीर्त्तिताः ।
जाग्रदादिनिवृत्त्यर्थमुपास्या व्यूहमूर्त्तयः ॥ ३६४॥

वासुदेवादयश्चाथ चत्वारस्तच्चतुष्टयात् ।
अष्टावथ च सञ्जाता व्यूहास्तेभ्यश्चतुष्टयात् ॥ ३६५॥

अच्युतोऽधोक्षजश्चाथ नृसिंहः पुरुषोत्तमः ।
उपेन्द्रश्च हरिश्चाथ कृष्णश्चाथ जनार्दनः ॥ ३६६॥

सञ्जाताश्च त्रयो व्यूहा व्यूहाच्छ्रीवासुदेवतः ।
केशवसंज्ञश्चाथ नारायणाश्च माधवः ॥ ३६७॥

त्रयो व्यूहाश्च सञ्जाता व्यूहात् सङ्कर्षणादथ ।
गोविन्दसंज्ञकश्चाथ विष्णुश्च मधूसूदनः ॥ ३६८॥

व्यूहा जातास्त्रयश्चाथ व्यूहात् प्रद्युम्नतः किल ।
श्री त्रिविक्रमसंज्ञश्च वामनः श्रीधरस्तदा ॥ ३६९॥

अनिरुद्धाच्च सञ्जातास्त्रयो व्यूहास्तथैव च ।
पद्मनामो हृषीकेशः श्रीमद्दामोदरस्तथा ॥ ३७०॥

व्यूहस्य चैकसंज्ञस्य विभिन्नसंहितासु च ।
कल्पभेदेन निर्वाह्या विभिन्नकारणादयः ॥ ३७१॥

शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तमः ।
अजितः खड्गधृग् विष्णुः कृष्णश्चैव वृहद्बलः ॥ ३७२॥

सेनानीर्ग्रामणीश्च त्वं बुद्धिः सत्त्वं क्षमा दमः ।
प्रभवश्चाप्ययश्च त्वमुपेन्द्रो मधुसूदनः ॥ ३७३॥

प्रभवश्चाप्ययश्च त्वं पद्मनाभो रणान्तकृत् ।
श्रीमद्रामायणे चैवं व्यूहा रामात् प्रकीर्तिताः ॥ ३७४॥

“ज्ञानादिगुणसामान्ये वासुदेवः प्रकीर्त्तितः ।
सङ्कर्षणो वासुदेवात् तस्मात् प्रद्युम्नसंज्ञितः ॥ ३७५॥

प्रद्युम्नादनिरुद्धोऽभूत् सर्व एते चतुर्भुजाः ।
मूर्तिभ्यश्च चतुर्भ्यश्च चतुर्विंशतिमूर्त्तयः ॥ ३७६॥

जायन्ते क्रमशो ब्रह्मन् दीपाद् दीपान्तरं यथा ।
सर्वेचतुर्भुजाः पद्मशङ्खचक्रगदाधराः ॥ ३७७॥

वासुदेवादादिदेवात् प्रथमात् केशवस्तथा ।

नारायणो माधवश्च जज्ञिरे भूसुरोत्तम ॥ ३७८॥

सङ्कर्षणाच्च गोविन्दो विष्णुश्च मधुसूदनः ।
त्रयस्ते समजायन्त प्रद्युम्नाच्च त्रिविक्रमः ॥ ३७९॥

वामनः श्रीधरश्चैते जज्ञिरे मुनिसत्तम ।
अनिरुद्धाद् हृषीकेशः पद्मनाभश्च सुव्रत ॥ ३८०॥

दामोदरश्च तेनेत्थं द्वादशांशाः प्रजज्ञिरे ।
इति पद्मसंहितायां व्यूहा द्वादश कीर्त्तिताः ॥ ३८१॥

केशवस्तु सुवर्णाभः शङ्खचक्रगदाधरः ।
शुक्लाम्बरधरः सौम्यो मुक्ताभरणभूषितः ॥ ३८२॥

नारायणो घनश्यामः शङ्खचक्रगदाऽसिभृत् ।
पीतवासा मणिमयैर्भूषणैरुपशोभितः ॥ ३८३॥

माधवश्चोत्पलप्रख्यश्चक्रशार्ङ्गगदाऽसिभृत् ।
चित्रमाल्याम्बरधरः पुण्डरीकनिभेक्षणः ॥ ३८४॥

गोविन्दः शशिवर्णः स्यात् पद्मशङ्खगदाऽसिभृत् ।
रक्तारविन्दपादाब्जस्तप्त काञ्चनभूषणः ॥ ३८५॥

गौरवर्णो भवेद्विष्णुश्चक्रशङ्खहलासिभृत् ।
क्षौमाम्बरधरः स्रग्वी केयूराङ्गदभूषितः ॥ ३८६॥

अरविन्दनिभः श्रीमान् मधुजित् कमलासनः ।
चक्रं शार्ङ्गं च मुशलं पद्मं दोर्भिर्विभर्त्यसौ ॥ ३८७॥

त्रिविक्रमो रक्तवर्णः शङ्खचक्रगदासिभृत् ।
किरीटहारकेयूरकुण्डलैश्च विराजितः ॥ ३८८॥

श्रीवामनः कुन्दवर्णः पुण्डरीकायतेक्षणः ।
दोर्भिर्वज्रं गदां चक्रं पद्मं हैमं विभर्त्त्यसौ ॥ ३८९॥

श्रीधरः पुण्डरीकाख्यश्चक्रशार्ङ्गी च पद्मधृक् ।
रक्तारविन्दनयनो मुक्तादामविभूषितः ॥ ३९०॥

विद्युद्वर्णो हृषीकेशश्चक्रशार्ङ्गहलासिभृत् ।
रक्तमाल्याम्बरधरः पुण्डरीकावतंसकः ॥ ३९१॥

इन्द्रनीलनिभश्चक्रशङ्खपद्मगदाधरः ।
पद्मनाभः पीतवासाश्चित्रमाल्यानुलेपनः ॥ ३९२॥

दामोदरः सार्वभौमः पद्मशार्ङ्गासिशङ्खभृत् ।
पीतवासा विशालाक्षो नानारत्नविभूषितः ॥ ३९३॥

व्यूहा द्वादशधा चैवं हारीतस्मृतिवर्णिताः ।
बोद्धव्या हि जनैर्दिव्या व्यूहतत्त्वबुभुत्सुभिः ॥ ३९४॥

(गुणयुग्मत्रयाद् व्यूहत्रयाविर्भावः)
तत्र ज्ञानबलद्वन्द्वाद् रूपं साङ्कर्षणं हरेः ।
ऐश्वर्यवीर्यसम्भेदाद् रूपं प्राद्युम्नमुच्यते ॥ ३९५॥

शक्तितेजः समुत्कर्षादानिरुद्धो तनुर्हरेः ।
एते शक्तिमयाव्यूहा गुणोन्मेषस्वलक्षणाः ॥ ३९६॥

(व्यूहत्रयेऽपि षाड्गुण्यानुवृत्तिः)
षाड्गुण्यविग्रहा देवाः पुरुषाः पुष्करेक्षणाः ।
तत्र तत्रावशिष्टं यद्गुणानां द्वियुगं मुने ॥ ३९७॥

(त्रिधा चातुरात्म्यस्थितिः)
अनुवृत्तिं भजत्येव तत्र तत्र यथायथम् ।
व्याप्तिमात्रं गुणोन्मेषो मूर्तिकार इति त्रिधा ॥ ३९८॥

(सङ्कर्षणस्य कृत्यम्)
चातुरात्म्य स्थितिर्विष्णोर्गुणव्यतिकरोद्भवा ।
तत्र ज्ञानमयत्वेन देवः सङ्कर्षणो बली ॥ ३९९॥

प्रद्युम्नस्य कृत्यं ◌ः
व्यनक्त्यैकान्तिकं मार्गं भगवत्प्राप्तिसाधनम् ।
वीर्यैश्वर्यमयो देवः प्रद्युम्नः पुरुषोत्तमः ॥ ४००॥

(अनिरुद्धस्य कृत्यम्)
स्थितः शास्त्रार्थभावेन भगवत्प्राप्तिवर्त्मना ।
शास्त्रार्थस्य फलं यत् तद् भगवत्प्राप्तिलक्षणम् ॥ ४०१॥

प्रापयत्यनिरुद्धः सन् साधकान् पुरुषोत्तमः ।
शास्त्रशास्त्रार्थतत्साध्यफलनिर्वाहका इमे ॥ ४०२॥

(परवासुदेवेन सह व्यूहस्य चातुरात्म्यम्)
पुरुषाः पुण्डरीकाक्षा व्यूहाः शक्तिमया हरेः ।
भगवान् वासुदेवश्च व्यूहाश्चैते त्रयो मुने ॥ ४०३॥

(गुणोन्मेषस्वरूपप्रदर्शनम्)
चातुरात्म्यमिदं विद्धि व्यक्ताव्यक्तस्वलक्षणम् ।
गुणाः शक्तिमया ये ते ज्ञानैश्वर्यबलादयः ॥ ४०४॥

तेषां युगपदुन्मेषः स्तैमित्यविरहात्मकः ।
सङ्कल्पकल्पितो विष्णोर्यः स तद्व्यक्तिलक्षणः ॥ ४०५॥

भगवान् वासुदेवः स परमा प्रकृतिश्च सा ।
शक्तिर्या व्यापिनो विष्णोः सा जगत्प्रकृतिः परा ॥ ४०६॥

(सिसृक्षोर्वासुदेवात् सङ्कर्षणाविर्भावः)
शक्तेः शक्तिमतो भेदाद् वासुदेव इतीर्यते ।
सर्वशक्तिमयो देवो वासुदेवः सिसृक्षया ॥ ४०७॥

(तत्र दृष्टान्तः)
विभजत्यात्मनाऽऽत्मानं यः स सङ्कर्षणः स्मृतः ।
भावानुदयशैलस्थे प्रभा यद्वद् विजृम्भते ॥ ४०८॥

(तस्य षोडशशतवर्षप्रतीक्षणम्)
उदयस्थे तथा देवे प्रभा सङ्कर्षणात्मिका ।
अव्यापृता शतान्येषा शक्तिस्तिष्ठति षोडश ॥ ४०९॥

सङ्कर्षणात्मिका साक्षाद विज्ञानबलवारिधिः ।
अनन्तो भगवान् विष्णुः शक्तिमान् पुरुषोत्तमः ॥ ४१०॥

पूर्णस्तिमितषाड्गुण्यो निस्तरङ्गार्णवोपमः ।
षण्णां युगपदुन्मेषाद् गुणानां स्वप्रचोदितात् ॥ ४११॥

अनन्त एव भगवान् वासुदेवः सनातनः ।
तत्र ज्ञानबलोन्मेषात् स्वसङ्कल्पप्रचोदितात् ॥ ४१२॥

(प्रद्युम्नाविर्भावः)
अनन्त एव भगवान् देवः सङ्कर्षणोऽच्युतः ।
स्थित्वा षोडशवर्षाणि देवः शक्तिमयोऽच्युतः ॥ ४१३॥

अनन्त एव भगवान् प्रद्युम्नः पुरुषोत्तमः ।
अंशांशेनोदिता शक्तिः प्राद्युम्नी भगवत्प्रभा ॥ ४१४॥

(अनिरुद्धाविर्भावः)
अव्यापृता शतान्येषा तुष्णीं तिष्ठति षोडश ।
ततः शक्तिमयो देवः प्रद्युम्नः पुरुषोत्तमः ॥ ४१५॥

शतानि षोडश स्थित्वा स्वसङ्कल्पप्रचोदितः ।
अनन्त एव भगवाननिरुद्धो भवत्युत ॥ ४१६॥

अंशांशेनोदिता शक्तिरानिरुद्धी हरेः प्रभा ।
अव्यापृता शतान्येषा तुष्णीं तिष्ठति षोडश ॥ ४१७॥

(व्यूहस्य षोडशशतवर्षानन्तरं सृष्टौ व्यापृतिः)
शतानि षोडश स्थित्वाऽनिरुद्धः शक्तिमानसौ ।
तदा व्याप्रियते सृष्टौ पूर्वाभ्यां सह नारद ॥ ४१८॥

(व्यूहानां हेयप्रतिभटत्वमनादित्वं च)
व्यूहा एते विशालाक्षाश्चत्वारः पुरुषोत्तमाः ।
निर्दोषा निरनिष्ठाश्च निरवद्याः सनातनाः ॥ ४१९॥

अनन्तरमक्षरं चैतच्चातुरात्म्यं महामुने ।
निस्तरङ्गदशायां ते निःसक्ताः सक्तचिन्मयाः ॥ ४२०॥

शक्त्यात्मका गुणोन्मेषदशायां ते व्यवस्थिताः ।
तत्र स्थूलदशायां ते व्यक्तिभावमुपागताः ॥ ४२१॥

(चातुरात्म्यस्य मनालम्बनार्थत्वम्)
जगतामुपकाराय सच्चिदानन्दलक्षणाः ।
मनालम्बनायैषा चातुरात्म्यव्यवस्थितिः ॥ ४२२॥

(व्यूहाद् व्यूहान्तराविर्भावः)
आम्नासिषुरमुष्याश्च रहस्याम्नायवेदिनः ।
व्यूहान्तरविभवादीन् भेदान् सङ्कल्पकल्पितान् ॥ ४२३॥

(द्वादश व्यूहान्तराणि)(वासुदेवादेः केशवादयः)
व्यूहान्तरं दश द्वे च केशवाद्याः प्रकीर्तिताः ।
केशवादित्रयं तत्र वासुदेवाद् विभाव्यते ॥ ४२४॥

सङ्कर्षणाच्च गोविन्दपूर्वं त्रितयमद्भुतम् ।
त्रिविक्रमाद्यं त्रितयं प्रद्युम्नादुदितं मुने ॥ ४२५॥

(व्यूहान्तरस्य त्रैविध्यम्)
हृषीकेशादिकं तद्वदनिरुद्धान् महामुने ।
पराः स्वकारणान्तस्थाः सूक्ष्मास्ते द्विभुजाः स्मृताः ॥ ४२६॥

चतुर्भुजास्ते विज्ञेयाः स्थूलास्त्रिभुवनेश्वराः ।
चक्राद्यायुधविन्यासो यन्त्रतन्त्रेऽभिधारयते ॥ ४२७॥

(अथ केशवादिस्वरूपवर्णनम्)
तप्तजाम्बूनदप्रख्यं पुण्डरीकायतेक्षणम् ।
अपारकरुणं पद्मशङ्खचक्रगदाधरम् ॥ ४२८॥

पीताम्बरधरं देवं वनमालाविभूषितम् ।
हारकेयूरकटककुण्डलैरूपशोभितम् ॥ ४२९॥

चतुर्बाहुसदाराङ्गं प्रसन्नवदनं विभुम् ।
प्रागादि विन्यसेद् देवं केशवं क्लेशनाशनम् ॥ ४३०॥

शङ्खपद्मचक्रगदाधरं नीलाम्बुदच्छविम् ।
सर्वालङ्कारसंयुक्तं कुर्यान्नारायणं ततः ॥ ४३१॥

पद्मकौमोदकीशङ्खचक्र धारिणमव्ययम् ।
देवमिन्दीवरश्यामं माधवं भावयेत् ततः ॥ ४३२॥

चक्रकौमोदकीशङ्खपद्मायुधविराजितम् ।
इन्दुबिम्बनिभं कुर्यात् गोविन्दममितैजसम् ॥ ४३३॥

गदाब्जशङ्खचक्रास्त्रधरं परमभूषितम् ।
विष्णुं विश्वपतिं कुर्यात् पद्मकिञ्जल्कसन्निभम् ॥ ४३४॥

चक्रशङ्खाम्बुजगदाधारिणं करुणानिधिम् ।
रक्तपद्मदलप्रख्यं तं कुर्वीत त्रिविक्रमम् ॥ ४३५॥

शङ्खचक्रगदापद्मधरं परमभूषितम् ।
तरुणादित्यसङ्काशं वामनं भावयेत् ततः ॥ ४३६॥

पद्मचक्रगदाशङ्खधरं सद्गुणसागरम् ।
पुण्डरीकनिभं देवं श्रीधरं परिकल्पयेत् ॥ ४३७॥

गदासुदर्शनयुते शङ्खपद्मे च बिभ्रतम् ।
विद्युत्प्रभं हृषीकेशं कुर्वीत कमलेक्षणम् ॥ ४३८॥

शङ्खपद्मे गदाचक्रे तथा बिभ्राणमुज्ज्वलम् ।
सहस्रादित्यसङ्काशं पद्मनाभं तु कारयेत् ॥ ४३९॥

पद्मशङ्खगदाचक्रधरं बन्धूकसन्निभम् ।
भक्त्यैकसुलभं देवं दामोदरमथ स्मरेत् ॥ ४४०॥

केशवादेश्च रूपाणि चेत्येवं दर्शितानि हि ।
अहिर्बुध्न्यसंहितायां बोध्यान्येतानि यत्नतः ॥ ४४१॥

(अथ व्यूहलोकाः)
श्रीसाकेतादधःस्थश्च श्रीगोलोको हि संस्थितः ।
श्रीनारायणलोकश्च तदधस्ताद् विराजितः ॥ ४४२॥

तदधस्ताद् वासुदेवव्यूहलोको हि वर्त्तते ।
भगवान् वासुदेवो हि सङ्कर्षणादिकारणम् ॥ ४४३॥

विराजते चतुर्भुजः शङ्खचक्रगदाधरः ।
वासुदेवादधःस्थश्च लोकः सङ्कर्षणस्य हि ॥ ४४४॥

यत्र नीलाम्बरधरो व्यूहः सङ्कर्षणः स्थितः ।
शुद्धस्फटिकतुल्योऽसौ रक्तपद्मनिभेक्षणः ॥ ४४५॥

दिव्यगन्धानुलिप्ताङ्गो हलहस्तश्चतुर्भुजः ।
वासुदेवस्य शेषश्च ह्यनन्तोऽनन्तविक्रमः ॥ ४४६॥

कालरुद्रयमादीनामन्तःस्थो लयकारकः ।
धारयति धरां चासौ ज्ञानबलसमन्वितः ॥ ४४७॥

प्रद्युम्नव्यूहलोकस्तु स्थितः सङ्कर्षणादधः ।
प्रद्युम्नो राजते यत्र किशोरो रक्तलोचनः ॥ ४४८॥

जगतो मोहकश्चासौ दिव्यभूषणभूषितः ।
ब्रह्मान्तःस्थो जगत्कर्त्ता वीर्यैश्वर्यसमन्वितः ॥ ४४९॥

अधोलोकस्तु प्रद्युम्नादनिरुद्धस्य कीर्तितः ।
शक्तितेजोयुतो व्यूहो यत्रानिरुद्धसंज्ञकः ॥ ४५०॥

अन्तर्यामी स मन्वादेर्जगतः पालको मतः ।

वशिष्ठसंहितायां हि व्यूहलोका मता इति ॥ ४५१॥

एवं तत्तद्व्यूहलोकास्तत्तल्लोकादधस्तनाः ।
स्वस्वाचार्यैश्च विज्ञेया अलं पल्लवितेन तत् ॥ ४५२॥

विभवस्वरूपम् ।
देवादिकविभूत्यां च तत्तत्साजात्यवत्तया ।
भक्ताँश्च रक्षितुं रामाविर्भावो विभवो मतः ॥ ४५३॥

अजायमानो बहुधा श्रुतेरत्रप्रमाणता ।
न कर्मफलभोगार्थः स त्वैच्छिकस्तनुग्रहः ॥ ४५४॥

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ ४५५॥

यदा यदा हि धर्मग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ४५६॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ ४५७॥

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ४५८॥

श्रीमद्भगवद्गीतायामेवमभिहितं यतः ।
प्राकृतजन्मभिन्नं तद् भगवज्जन्म सम्मतम् ॥ ४५९॥

यथार्थज्ञानतः स्वस्य दिव्यं जन्म तदैश्वरम् ।
परमोपायभूतं तद् सन्तारकं भवाम्बुधेः ॥ ४६०॥

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम ॥ ४६१॥

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ ४६२॥

तानहं द्विषतः क्रूरान संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ ४६३॥

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ! ततो यान्त्यधमां गतिम् ॥ ४६४॥

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ ४६५॥

नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ ४६६॥

अवतारस्य चावज्ञां कुर्वन्त्यासुरबुद्धयः ।
तेषां भगवता प्रोक्ता गीतायामधमा गतिः ॥ ४६७॥

अवतारचरित्राणि तारकाणि भवार्णवात् ।
वैराग्यं जनयित्वा च भक्तेः संवर्धकानि हि ॥ ४६८॥

ब्रह्मणो ननु रामस्य निराकारावतारिणः ।
कथङ्कारं भवेदत्र साकारात्मावतारता ॥ ४६९॥

इति चेन्न कुतो यस्मात् काष्ठव्याप्तोऽनलः खलु ।
काष्ठस्याकारतां याति प्राकट्ये हि यथा तथा ॥ १७०॥

अग्निर्यथैक इत्यादेः श्रुतेरत्र प्रमाणता ।
तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी ॥ ४७१॥

आप्रणखात् सर्व एव सुवर्णश्चेति वाक्यतः ।
रामे ब्रह्मणि किञ्चैवं दिव्या साकारता श्रुता ॥ ४७२॥

अचक्षुश्चेतिबाधस्तु प्राकृतस्यैव चक्षुषः ।
तस्य यथा श्रुतेर्मानान्नतु दिव्यस्य चक्षुषः ॥ ४७३॥

तदभावो न तल्लोके ह्यवतारग्रहेऽपि च ।
रामस्य ब्रह्मणो यस्मात् सर्वत्र परिपूर्णता ॥ ४७४॥

कदापि प्रकृतेः सङ्गो रामस्य मोहको न हि ।
भवतो राघवादेव स्मृतिज्ञानव्यपोहने ॥ ४७५॥

स्वरूपेण स्वभावेन शरीरेणापि निर्मलः ।
सर्वावस्थासु रामो हि मालिन्यं समुपैति न ॥ ४७६॥

रामांशोऽपि प्रकारत्वाज्जीवो बद्धः स्वकर्मभिः ।
जीवसंसारमालिन्यं भासते कर्मबन्धनात् ॥ ४७७॥

उपैति ब्रह्मसादृश्यं ब्रह्माहमिति भावयन् ।

विमुक्तः कर्मणा जीवस्तदा भवति निर्मलः ॥ ४७८॥

संसारो भासते जीवे रामांशे मोहतः खलु ।
अवतारस्वरूपे तु लोकदृष्ट्या न मोहतः ॥ ४७९॥

अनंशे राघवे पूर्णे ब्रह्मणि सर्वशेषिणि ।
मालिन्यं न स्वभावेन शेषयोस्तत्त्वतो न हि ॥ ४८०॥

उभ्भावंशौ तरङ्गौ च ह्यतरङ्गस्तु राघवः ।
निराकुलः स संसारादवतारी परेश्वरः ॥ ४८१॥

प्रकृतेः सङ्गतो जीवो सत्वादित्रिगुणोऽस्ति हि ।
मुक्तौ तु निर्गुणः सोऽथ गुणत्रयविमोचनात् ॥ ४८२॥

स्वप्रपन्नस्य रामो हि गुणत्रयविमोचकः ।
रामस्तु निर्गुणो नित्यं प्रकृतिसङ्गवर्जितः ॥ ४८३॥

सगुणश्च परो रामो दिव्यानन्तगुणार्णवः ।
अंशव्यावर्त्तकं रामे निर्गुणेति विशेषणम् ॥ ४८४॥

रामांशस्य तु जीवस्य गुणमोहाद्धि संसृतिः ।
अवतारेऽन्यदृष्ट्या तु भासितं बन्धनं नहि ॥ ४८५॥

रामस्य सगुणांशम्य सगुणत्व निवृत्तये ।
निर्गुणश्चापि रामांशोऽवतारो गुणवानिव ॥ ४८६॥

दिव्यादिव्यविभूत्योश्च स्वामी रामोऽखिलेश्वरः ।
सर्वशक्तिः स एवाथ तद्द्वयं च विभर्त्ति हि ॥ ४८७॥

समष्टिव्यष्टिदेहत्वाद् रामे मानं हि भासते ।
उभ्योरात्मभूतस्तु रामोऽनन्तश्च निर्गुणः ॥ ४८८॥

अगम्यश्चाथ गम्यश्च श्रीमद्रामः प्रकीर्त्तितः ।
भक्तिशून्यैरगम्यः स गम्यो भक्तैर्मुमुक्षुभिः ॥ ४८९॥

गुरुशास्त्रोपदेशाच्च संशयस्य च सङ्क्षयात् ।
तस्मिन् न्यस्तधियो भक्तास्तद्गतिं प्राप्नुवन्ति हि ॥ ४९०॥

वदन्ति मलिनं रामं मलिना राममायया ।
भवन्ति निर्मला भक्त्या राम विज्ञाय निर्मलम् ॥ ४९१॥

निर्मलं हि स्वभावेन सद्गुरोः कृपया जनाः।
लीलार्थमनुकर्त्तारं रामं विदन्ति तित्वतः ॥ ४९२॥

मत्स्यः पाणोश्रुतावस्यां मत्स्यः शतपथे श्रुतः ।
स यत्कूर्मः श्रुतावेवं कूर्मः शतपथे मतः ॥ ४९३॥

वराहो भूत्वाऽहरच्चे व तैत्तिरीये वराहकः ।
नृसिंहस्तैत्तिरीये हि तन्नो नरसिंहस्त्विति ॥ ४९४॥

ऋग्वेदे वामनः प्रोक्त इदं विष्णुर्विचक्रमे ।
विप्रस्तरति चेत्येवं जामदग्न्य उदीरितः ॥ ४९५॥

अभिराममस्थादिति श्रीरामश्चाभिभाषितः ।
कृष्णन्त एम इत्येवं श्रीकृष्णश्चापि व्याहृतः ॥ ४९६॥

एवञ्चैशावतारत्वे प्रोक्ता वेदप्रमाणता ।
अवैदिकी ततो ज्ञेया ह्यवताराप्रमाणता ॥ ४९७॥

मत्स्याः कूर्मो वराहश्च कपिलर्षिस्तथा नरः।
नारद ऋषभो यज्ञो दत्तात्रेयोऽथ मोहिनी ॥ ४९८॥

नृसिंहो वामनो व्यासो जामदग्न्यश्च राघवः ।
बलरामोऽथ कृष्णश्च पर धन्वन्तरिर्हरिस्तथा ॥ ४९९॥

हंसः सनत्कुमारश्च कल्किर्बुद्धः पृथुस्तथा ।
चतुर्विंशतिसङ्ख्याका विभवाः सम्प्रकीर्तिताः ॥ ५००॥

श्रीमद्भागवते चैषां वेद्यं वृत्तं विशेषतः ।
वृत्तं रामायणेवेद्यं श्रीरामस्यावतारिणः ॥ ५०१॥

श्रीभगवच्चरित्राणां कथनाच्छ्रवणादपि ।
नरो याति हि तद्धाम यद् गत्वा न निवर्त्तते ॥ ५०२॥

मुक्तये मुक्तिकामैश्च श्रीरामस्यावतारिणः ।
प्रधाना विभवा एषु वेद्या मत्स्यादयो दश ॥ ५०३॥

रामो हि चैत्रशुक्लस्य चादिमायां तिथौ खलु ।
अन् श्रीमत्स्यरूपः सन् दैत्यं वेदापहारकम् ॥ ५०४॥

रामो हि ज्येष्ठशुक्लस्य द्वितीयायां तिथौ खलु ।
कूर्मावताररूपः सन् महाधीरो ह्यजायत ॥ ५०५॥

रामो हि माघशुक्लस्य सप्तम्यां च तिथाविह ।
श्रीमद्वराहरूपः सन् हिरण्याक्ष जघान हि ॥ ५०६॥

रामो वैशाखशुक्लस्य चतुर्दश्यां तिथौ खलु ।
श्रीमन्नृसिंहरूपः सन् हिरण्यकशिपुं व्यहन् ॥ ५०७॥

रामो हि शुक्लद्वादश्यां मासे भाद्रपदे शुभे ।
श्रीमद्वामनरूपः सन् पातालं प्रापयद् बलिम् ॥ ५०८॥

रामो वैशाखशुक्लस्य तृतीयायां तिथौ खलु ।
श्रीमत्परशुरामः सन् जघान दुष्टक्षत्रियान् ॥ ५०९॥

रामो हि चैत्रशुक्लायां नवम्यां च परः पुमान् ।
श्रीयुतरामरूपः सन् रावणं हतवानिह ॥ ५१०॥

रामो भाद्रपदस्याथ कृष्णाष्टम्यां तिथाविह ।
श्रीयुतकृष्णरूपः सन् कंसादिकं जघान हि ॥ ५११॥

रामश्चाषाढ शुक्लस्य दशम्यां च तिथौ किल ।
श्रीमद्बुद्धस्वरूपः सन् वञ्चयामास चासुरान् ॥ ५१२॥

रामः शुक्लद्वितीयायां मासे च मार्गशीर्षके ।
श्रीयुतकल्किरूपःसन् दुष्टनाशं करिष्यति ॥ ५१३॥

मुख्यामुख्यादिभेदाच्च कलाद्यावेशभेदतः ।
नानाविभवभेदा हि पाञ्चरात्रे प्रकीर्तिताः ॥ ५१४॥

भवान् नारायणो देवः श्रीमाँश्चक्रायुधः प्रभुः ।
एकशृङ्गो वराहस्त्वं भूतभव्यसपत्नजित् ॥ ५१५॥

लोकानां त्वं परो धर्मो विष्वक्सेनश्चतुर्भुजः ।
त्वया लोकास्त्रयः क्रान्ताः पुरा स्वैविक्रमैस्त्रिभिः ॥ ५१६॥

महेन्द्रश्च कृतो राजा बलिं बध्वा सुदारुणम् ।
श्रीमद्रामायणे चैवं श्रीरामाद् विभवा मताः ॥ ५१७॥

रामः सर्वावताराणामवतारी समीरितः ।
परित्राणं च साधूनामवतारप्रयोजनम् ॥ ५१८॥

सर्वेभ्यश्चाभयं दत्ते रामः सकृत्प्रपत्तितः ।

स्वाश्रितस्यापराधांश्च रामः स्मरति नैव हि ॥ ५१९॥

साक्षाद् गौणस्तथाऽऽवेश इत्येवं विभवात्त्रयः ।
मुख्यमुख्यतरत्वादिभेदात् साक्षात् त्रिधा मतः ॥ ५२०॥

नृसिंहवामनभेदाद् द्विधा मुख्यः प्रकीर्त्तितः ।
मुख्यतरश्च श्रीकृष्णो रामो मुख्यतमस्तथा ॥ ५२१॥

मत्स्यकूर्मादिभेदैश्च मतो गौणस्त्वनेकधा ।
कलास्वरूपशक्तीनामावेशात् त्रिविधोऽन्तिमः ॥ ५२२॥

विभवाश्च कलावेशात् पृथुधन्वन्तरादयः ।
शुद्धावेशस्तथाऽशुद्धावेशो द्विधा च मध्यमः ॥ ५२३॥

शुद्धावेशाश्च विज्ञेयाः श्रीव्यासकपिलादयः ।
मता परशुरामादावशुद्धावेशता बुधैः ॥ ५२४॥

शक्त्यावेशो द्विधा शुद्धाशुद्धत्वभेदतो मतः ।
आदिमोऽपि द्विधा मुख्यगौणभेदात प्रकीर्त्तितः ॥ ५२५॥

हंसादयो मता मुख्या गौणा बुद्धादयो मताः ।
अन्तिमोऽपि द्विधा मुख्यगौणभेदादुदीरितः ॥ ५२६॥

तत्र ब्रह्मादयो मुख्या गौणा मन्वादयो मताः ।
संरक्षकाश्च साधूनां धर्मसंस्थापकास्तथा ॥ ५२७॥

इत्येवं विभवाः प्रोक्ताः प्रमेयोद्देशभास्करे ।
वशिष्ठसंहितावच्छ्रीचिदानन्देन भाषिते ॥ ५२८॥

रामोऽखिलावताराणामवतारी पराशर ।
साधुधर्मान् परित्रातुमाविर्भवति सोऽत्र हि ॥ ५२९॥

रामः सकृत् प्रपत्यैव सर्वभीतिहरोऽस्ति च ।
नैव पश्यति भक्तानामपराधं दयार्णवः ॥ ५३०॥

साक्षाद् गौणस्तथाऽऽवेशो विभवास्त्रिविधा इति ।
मुख्यमुख्यतरत्वादिभेदात् साक्षान्मतस्त्रिधा ॥ ५३१॥

नृसिंहवामनश्चेति द्विधा मुख्य उदीरितः ।
कृष्णो मुख्यतरस्तत्र रामो मुख्यतमस्तथा ॥ ५३२॥

मत्स्यकूर्मादिभिर्भेदैर्गौणोऽनेकविधः स्मृतः ।
कलास्वरूपशक्तीनामावेशादन्तिमस्त्रिधा ॥ ५३३॥

विभवाश्च कलावेशात् पृथुधन्वन्तरादयः ।
मध्यमस्तु द्विधा शुद्धाशुद्धावेशाद्धि सम्मतः ॥ ५३४॥

शुद्धावेशाश्वच बौद्धव्याः श्रीव्यासकपिलादिकाः ।
श्रीमत्परशुरामादावशुद्धावेशता मता ॥ ५३५॥

शुद्धाशुद्धत्वभेदाच्च शक्त्यावेशः स्मृतो द्विधा ।
मुख्यगौणविभेदाच्च द्विधैव चान्तिमः स्मृतः ॥ ५३६॥

मुख्या ब्रह्मादयस्तत्र गौणा मन्वादयोऽथ च ।
श्रीवशिष्ठसंहितायामुक्ताश्च विभवा इति ॥ ५३७॥

मुख्या रामावतारास्तु दीपादुत्पन्नदीपवत् ।
श्रीरामेण समाः किन्तु रामस्यैवावतारिता ॥ ५३८॥

ऐश्वर्यस्य हि प्राकट्ये चाविश्य क्वचिदात्मनि ।
श्रीरामगौणता बोध्या तद्वतां चानुपास्यता ॥ ५३९॥

अप्राकृतस्य रूपस्य प्राकट्येऽद्वारके खलु ।
श्रीरामे मुख्यता तद्वानुपास्यः स मुमुक्षुभिः ॥ ५४०॥

ब्रह्मविष्णुमहेशाद्या यस्यांशा लोकसाधकाः ।
तमादिदेवं श्रीरामं विशुद्धं परमं भजे ॥ ५४१॥

ब्रह्मविष्णुमहेशादेरंशिता सकलेश्वरे ।
श्रीरामायणमाहात्म्ये रामे व्यासेन कीर्त्तिता ॥ ५४२॥

षाड्गुण्यस्य च रामस्य साकल्ये पूर्णता मता ।
कलात्वं षोडशे भागे चतुर्थांशे तदंशता ॥ ५४३॥

उत्तरेण चरित्रेण श्रीरामस्यावतारिणः ।
वर्णितं पूर्णरूपेण चावतारस्य कारणम् ॥ ५४४॥

श्रीबोधायनगीतायामित्यवतार कारणम् ।
साधुसंरक्षणं प्रोक्तं धर्मसंस्थापनं तथा ॥ ५४५॥

अवतारा अनन्ताश्च रामस्य परमात्मनः ।
सर्वश्रेष्ठो मतस्तेषु राघवः सकलेश्वरः ॥ ५४६॥

अन्तःस्थत्वे च सर्वस्य रामे रक्षाविधातृता ।
तत्सृष्ट्वेति श्रुतावुक्ता रामान्तर्यामिता हि सा ॥ ५४७॥

गुहाहितं गह्वरेष्ठमिति श्रुतिप्रमाणतः ।
ध्यानाय विग्रहेणापि सर्वान्तःस्थो हि राघवः ॥ ५४८॥

वैराग्याभ्यासयुक्तानां योगसंस्कृतचेतसाम् ।
निष्पन्नभक्तियोगानामेव ग्राह्यो भवेद्धि सः ॥ ५४९॥

अन्तः प्रविष्टः शास्तेति श्रीरामेऽन्तःस्थता श्रुता ।
जगत् सर्वं शरीरं ते सर्वात्मतेति राघवे ॥ ५५०॥

योऽन्तरात्मा हि सर्वेषां श्रीरामः शरणं मम ।
इत्याद्यागमवाक्येऽपि रामस्योक्ताऽन्तरात्मता ॥ ५५१॥

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन सर्वभूतानि यन्त्रारूढानि मायया ॥ ५५२॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वरः ॥ ५५३॥

श्रीरामश्चेति गीतायां लोकान्तःस्थो नियामकः ।
सर्वं सृष्ट्वा प्रविष्टोऽन्तर्जीवेन चात्मना स्वयम् ॥ ५५४॥

निर्लिप्तश्च स्वतन्त्रश्च भोगवर्ज्यश्च भोगदः ।
विलक्षणश्च सर्वेभ्यः सर्वजगच्छरीरकः ॥ ५५५॥

सर्वशक्तिश्च सर्वेषां शक्तिदः सर्वरक्षकः ।
भक्तैश्च योगिभिर्ध्येयः प्रीतः सन् मार्गदर्शकः ॥ ५५६॥

साक्षी च समदर्शी च श्रितदोषान् न पश्यति ।
सकृदेव प्रपन्ननां सर्वभीतिनिवारकः ॥ ५५७॥

सर्वत्र रमते रामः सर्वे च रमयत्यपि ।
परमात्मा ततो रामः सर्वात्मेतिमतं बुधैः ॥ ५५८॥

रामे विश्वं च विश्वस्मिन् व्याप्य रामो हि संस्थितः ।
अन्तर्यामितया सर्वः सर्वेषां प्रेरकस्तथा ॥ ५५९॥

रामो हि पुरुषः सर्वदेहेषु निरुपाधिकः ।

उत्तमश्च महान् रामः सर्वेषु पुरुषेषु तत् ॥ ५६० ॥

अन्तर्बहिर्जगत् सर्वं व्याप्य रामो हि संस्थितः ।
अनेन संवृतं ह्यन्तर्बहिः सर्वं तथाऽऽवृतम् ॥ ५६१ ॥

प्रत्येकं हृदयं राम एकोऽपि बहुरूपतः ।
तत्तद्देहविशिष्टः सन्नाविर्भवति वै विभुः ॥ ५६२ ॥

संस्थितो हृद्गुहायां स राघवो देहतः श्रुतः ।
सृष्टिमनुप्रविष्टः स ह्यन्तर्यामितया तथा ॥ ५६३ ॥

दृश्यसे सर्वभूतेषु गोषु च ब्राह्मणेषु च ।
दिक्षु सर्वासु गगने पर्वतेषु नदीषु च ॥ ५६४ ॥

सहस्रचरणः श्रीमाञ्शतशीर्षः सहस्रदृक् ।
त्वं धारयसि भूतानि पृथिवीं सर्वपर्वतान् ॥ ५६५ ॥

जगत् सर्व शरीरं ते स्थैर्यं ते वसुधातलम् ।
इति रामायणे प्रोक्ता रामान्तर्यामिता किल ॥ ५६६ ॥

नराणां च समूहस्तु विश्रुतो नारसंज्ञकः ।
तन्नारमयनं यस्य नारायणः स राघवः ॥ ५६७ ॥

रमन्तेयोगिनोऽनन्ते नित्यानन्दे चिदात्मनि ।
इति रामपदेनासौ परब्रह्माभिधीयते ॥ ५६८ ॥

रमयति जगत् सर्वं रामश्चिदचिदात्मकम् ।
जगत्सृष्ट्यादिलीलाभी रामो हि रमते सदा ॥ ५६९ ॥

चिदचित्प्रकृतौ रामश्चान्तरात्मतया स्थितः ।
हेययोगोऽथ चात्मनि यौवनादिवत् ॥ ५७० ॥

श्रीरामः सर्वभूतस्थो दारुस्थानलवद्धि यः ।
सदोपास्यः स सद्भिश्च श्रद्धया मोक्षमिच्छुभिः ॥ ५७१ ॥

स्वान्तःस्थं च परेशं तं समुपास्य मुमुक्षवः ।
सायुज्यं ब्रह्मणो यान्ति देहं त्यक्त्वाऽर्चिरादिना ॥ ५७२ ॥

अर्चावतार ः

स्वीकृतश्च तनुत्वेन येन मण्यादिविग्रहः ।
रामस्यार्चावतारः स रामाश्रितजनेप्सितः ॥ ५७३ ॥

विराजतेऽतिरम्योऽसौ शैलतीर्थगृहादिषु ।
सर्वथा लोककल्याणं कुर्वाणोऽमोघपूजया ॥ ५७४॥

दिव्यदेह विशिष्टः श्रीरामो बिम्बेऽनुकम्पया ।
सर्वातिशायिषाड्गुण्यं राममूर्तौ हि वर्त्तते ॥ ५७५॥

सर्वातिशायिषाड्गुण्यं संस्थितं मन्त्रबिम्बयोः ।
मन्त्रे वाच्यात्मना बिम्बे कृपया समुपस्थितम् ॥ ५७६ ॥

तेनार्च्यो भगवान् साक्षान्नोपचारधिया क्वचित् ।
विष्वक्सेनसंहितायामित्येवं परिकीर्त्तितम् ॥ ५७७॥

रामो मूर्त्तावुपास्यो हि स्थापितः श्रुतिभिः श्रितैः ।
अर्चितव्यः प्रणम्यश्च द्रष्टव्यश्च मुमुक्षुभिः ॥ ५७८॥

अमोघसंस्तवो रामो ह्यमोघं रामदर्शनम् ।
अमोघमरणो रामश्चामोघं रामवन्दनम् ॥ ५७९॥

सुरूपां प्रतिमां विष्णोः प्रसन्नवदनेक्षणाम् ।
कृत्वात्मनः प्रीतिकरीं सुवर्णरजतादिभिः ॥ ५८०॥

तस्यां ब्रह्म समारोप्य मनसा तन्मयो भवेत् ।
तामर्चयेत् तां प्रणमेत् तां भजेत् तां विचिन्तयेत् ॥ ५८१ ॥

विशत्यापास्तदोषस्तु तामेव ब्रह्मरूपिणीम् ।
विष्णुधर्मोत्तरे चैवमीशमूर्त्तिर्हि वर्णिता ॥ ५८२॥

मूर्तौ तत्स्थस्य रामस्य दिव्यदेहोऽस्ति मूर्त्तिवत् ।
प्रतिमायां भज्यमानायां तद्देहो भज्यते न हि ॥ ५८३॥

मूर्तिर्भवति साकारा साकारो राघवो यतः ।
प्राकृताकारशून्यत्वान्निराकारः श्रुतः क्वचित् ॥ ५८४॥

तच्छ्रुयतामनाधारा धारणा नोपपद्यते ।
प्रसन्नवदनं चारुपद्मपत्रोपमेक्षणम् ॥ ५८५॥

सुकपोलं सुविस्तीर्णललाटफलकोज्वलम् ।
समकर्णान्तविन्यस्त चारुकुण्डलभूषणम् ॥ ५८६॥

कम्बुग्रीवं सुविस्तीर्ण श्रीवत्साङ्कितवक्षसम् ।

बालत्रिभङ्गिनामघ्ननाभिना ह्युदरेण च ॥ ५८७॥

प्रलम्बाष्टभुजं विष्णुमथवापि चतुर्भुजम् ।
समस्थितोरुजङ्घं च सुस्थिताङ्घ्रिवराम्बुजम् ॥ ५८८॥

चिन्तयेद् ब्रह्मभूतं तं पीतनिर्मलवाससम् ।
किरीटहारकेयूरकण्टकादि विभूषितम् ॥ ५८९॥

शार्ङ्गशङ्खगदाखड्गचक्राक्षवलयान्वितम् ।
वरदाभयहस्तं च मुद्रिकारत्नभूषितम् ॥ ५९०॥

चिन्तयेत् तन्मयो योगी समाधायात्ममानसम् ।
इति विष्णुपुराणे हि प्रोक्ता साकारता हरेः ॥ ५९१॥

रामस्यार्चावतारे न नियमो देशकालयोः ।
सुलभो मूर्त्तिवन्नेशः स्वरूपेषु परादिषु ॥ ५९२॥

तद्युगस्थावतारैश्च तत्स्था भक्ता हि रक्षिताः ।
अन्ययुगावतारैश्चेतरस्था रक्षिता न तु ॥ ५९३॥

रक्षिताः सर्वकालस्था भक्ता रामस्य मूर्त्तिभिः ।
स्थापितः सुलभो रामो मूर्त्तौ मन्त्रैश्च वैदिकैः ॥ ५९४॥

मूर्त्तयो विमुखानां च स्वरूपोदारतादिभिः ।
जनयन्ति रुचिं रामे वैमुख्यमपसार्य हि ॥ ५९५॥

गुणाः पूर्णाश्च मूर्त्तौ हि रामानुभाव्यतादयः ।
ततोऽतिसुलभो रामो स्वमूर्त्तावुच्यते बुधैः ॥ ५९६॥

स्वस्वामिभावव्यत्यासं कुर्वन्नज्ञ इव स्थितः ।
मूर्त्तौ शक्तोऽप्यशक्तश्च स्वतन्त्रोऽप्यस्वतन्त्रवत् ॥ ५९७॥

यथालब्धोपचारैश्च सन्तुष्टः पूजया परम् ।
अपारकरुणाधीनो रामश्चेष्टं प्रयच्छति ॥ ५९८॥

स्नात्वा सन्ध्यादिकं कृत्वा देवाभ्यर्चनकारकः ।
श्रीवशिष्ठसंहितायामिति देवार्चनं मतम् ॥ ५९९॥

अर्चावतारः सर्वेषां बान्धवो भक्तवत्सलः ।
स्वतन्त्रः स जगन्नाथोऽप्यस्वतन्त्रो यथा तथा ॥ ६००॥

सर्वशक्तिर्जगद्धाताऽप्यशक्त इव चेष्टते ।
सर्वान् कामान् दधत् स्वाम्यप्यशक्त इव लक्ष्यते ॥ ६०१॥

अपराधानभिज्ञः सन् सदैव कुरुते दयाम् ।
विष्वक्सेनसंहितायामित्युक्ता प्रतिमागुणाः ॥ ६०२॥

अतः श्रद्धान्वितो भूत्वा कुर्याच्छ्रीराघवार्चनम् ।
इतिशिवसंहितायां श्रीराघवार्चनं मतम् ॥ ६०३॥

न तस्य प्रतिमेत्येवमीशोपमैव बाधिता ।
रामस्य प्रतिमावत्वे श्रुतिस्मृतिप्रमाणतः ॥ ६०४॥

एह्यश्मानमातिष्ठाश्मा भवतु ते तनुः ।
कृण्वन्तु विश्वेदेवा आयुष्टे शरदः शतम् ॥ ६०५॥

अथर्ववेदवाक्येऽत्र सर्वेशप्रतिमा मता।
सहस्रस्य प्रतिमाऽसि यजुर्वेदे मतेति च ॥ ६०६॥

काऽऽसीत् प्रमा प्रतिमा ऋग्वेदेऽपि तथैव च ।
अहं सन्निहितस्तत्र पाषाणप्रतिमादिषु ॥ ६०७॥

श्रीरामोत्तरतापिन्यां पाषाणप्रतिमा इति ।
भगवद्विग्रहार्चेति सीतोपनिषदि तथा ॥ ६०८॥

लब्धानुग्रह आचार्यात् तेन सन्दर्शितागमः ।
महापुरुषमभ्यर्चेन् मूर्त्याभिमतयाऽऽत्मनः” ॥ ६०९॥

अर्चायामेव हरये पूजां यः श्रद्धयेहते ।
व्यरुदन् देवलिङ्गानि श्रीमद्भागवतेऽपि च ॥ ६१०॥

मङ्गलालपनैर्होमैः शोभिताः क्षौमवाससः ।
देवतायतायतनान्याशु सर्वाः ताः प्रत्यपूजयन् ॥ ६११॥

क्वचिच्चैत्यशतैर्जुष्टः सुनिविष्टजनाकुलः ।
देवस्थानैः प्रपाभिश्च तटाकैश्चोपशोभितः ॥ ६१२॥

कच्चिद् गुरूँश्च वृद्धाँश्च तापसान् देवतातिथीन् ।
चैत्याँश्च सर्वान् सिद्धार्थान् ब्राह्मणाँश्च नमस्यसि ॥ ६१३॥

ध्यायन्नारायणं देवं स्वास्तीर्णे कुशसंस्तरे ।
वाग्यतः सह वैदेह्या भूत्वा नियतमानसः ॥ ६१४॥

श्रीमत्यायतने विष्णोः शिश्ये नरववरात्मजः ।
इति रामायणे चापि प्रतिमापूजनं मतम् ॥ ६१५॥

अनन्यशरणाः सर्वे कलौ सम्पूज्य केशवम् ।
पराशरधर्मशास्त्रे चैवं केशवपूजनम् ॥ ६१६॥

अर्चावतारा देवस्य वैभवाः परमात्मनः ।
इति पद्मपुराणेऽपि देवस्यार्चावतारता ॥ ६१७॥

शालग्रामशिलायां च तुलसीदलकल्पिता ।
पूजा श्रीरामचन्द्रस्य कोटिकोटिगुणाधिका ॥ ६१८॥

तुलसीपत्रमात्रेण योऽर्चयेद् राममन्वहम् ।
स याति शाश्वतं ब्रह्म पुनरावृत्तिवर्जितम् ॥ ६१९॥

इत्यगस्त्यसंहितायां राममूर्त्तिर्हि सम्मता ।
अहोरात्रं हरेर्नाम कीर्त्तयन्ति च ये नराः ॥ ६२०॥

कुर्वन्ति हरिपूजां वा न कलिर्बाधते च तान् ।
नारदीयपुराणे च भगवत्पूजनं त्विति ॥ ६२१॥

प्रतिमाभङ्गकारी च ह्यप्रतिष्ठः प्राजायते ।
प्रतिमा सम्मता चैवं शातातपस्मृतावपि ॥ ६२२॥

सङ्क्रमध्वजयष्टीनां प्रतिमानां च भेदकः ।
इति मनुस्मृतौ चापि प्रतिमा सम्मता खलु ॥ ६२३॥

परित्राणाय भक्तानां प्रादुर्भावः कृतो मया ।
प्रादुर्भावाकृतिः काचिदर्चयेत् तां युधिष्ठिर ॥ ६२४॥

तेनैव परितुष्टोऽहं भविष्यामि न संशयः ।
वैष्णवधर्मशास्त्रे च गौतमीयेऽर्चनं त्विति ॥ ६२५॥

तस्मिन् शुभ्राश्रये देवमर्चयेद् रमया सह ।
श्रीवशिष्ठस्मृतौ चैवं देवार्चनं प्रकीर्त्तितम् ॥ ६२६॥

षड्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतम् ।
अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च ॥ ६२७॥

विष्णोरभ्यर्चनं यत्तु नित्यं नैमित्तिकं नृप ।

स्वस्मृताविति सम्प्रोक्तं हारीतेनार्चनं हरेः ॥ ६२८॥

यथालाभमर्चयेच्च कृत्वा प्रतिकृतिं तथा ।
श्रीबोधायनकल्पे च प्रोक्तः पूजाविधिर्हरेः ॥ ६२९॥

सीतापतेश्च रामस्य सम्प्रोक्तं विग्रहार्चनम् ।
श्रीमद्गङ्गाधरोक्ते चानन्यताऽऽवेदने तथा ॥ ६३०॥

समस्तैरुपचारैश्च या पूजा तु मया कृता ।
सा सर्वा पूर्णतां यातु ह्यपराधं क्षमस्व मे ॥ ६३१॥

सदानन्देन चेत्येवं श्रीरामयज्ञपद्धतौ ।
स्वीकृतं श्रद्धया श्रीमद्रामाख्यब्रह्मपूजनम् ॥ ६३२॥

श्रीरामस्यार्चया भक्त्या नमस्कृत्या तथैव च ।
रामे चेतो निवेशेन रामप्राप्तिर्भवेद् ध्रुवम् ॥ ६३३॥

रामेश्वरार्यसम्प्रोक्ते सत्प्रबोधामृते तथा ।
एवमुक्ता हि रामस्य विग्रहस्य शुभार्चनम् ॥ ६३४॥

अर्चनीयौ जनैः कौ च सीतारामौ परात्परौ ।
सीतारामार्चनं चैवं द्वारानन्दार्यसम्मतम् ॥ ६३५॥

षोडशविधिना यत्र राममूर्त्तिर्हि पूज्यते ।
इत्थं हि पूजनं मूर्त्तेर्देवानन्दार्यसम्मतम् ॥ ६३६॥

अथातः सम्प्रक्ष्यामि प्रतिमा विधिमुत्तमम् ।
शिलामयी लोहमयी तथा रत्नमयीति च ॥ ६३७॥

तथा काष्ठमयी चेति मृन्मयी चेति पञ्चधा ।
सनत्कुमारसम्प्रोक्तमेवं हि मूर्त्तिपञ्चकम् ॥ ६३८॥

शैली दारुमयी लौही लेप्या लेख्या च सैकती ।
मणिमयी मनोमयी प्रतिमाष्टविधा स्मृता ॥ ६३९॥

चलाचलेति द्विविधा प्रतिष्ठा जीवमन्दिरम् ।
श्रीमद्भागवते चेत्थं प्रतिमा चाष्टविधा मता ॥ ६४०॥

स्वयंव्यक्तश्च देवश्च सैद्धश्च मानुषः खलु ।
मूर्त्तिभेदाश्चतुर्धैवं प्रमेयोद्देशभास्करे ॥ ६४१॥

गुणलीलास्वरूपैश्चमितिर्यस्य न विद्यते ।
अतो वाङ्मनसावेद्यः श्रीरामः शरणं मम ॥ ६४२॥

कर्ता सर्वस्य जगतो भर्ता सर्वस्य सर्वगः ।
आहर्त्ता कार्यजातस्य श्रीरामः शरणं मम ॥ ६४३॥

वासुदेवादिमूर्त्तनां चतुर्णां कारणं परम् ।
चतुर्विंशतिमूर्त्तीनामाश्रयः शरणं मम ॥ ६४४॥

नित्यमुक्तजनैर्जुष्टो निविष्टः परमे पदे ।
परं परमभक्तानां श्रीरामः शरणं मम ॥ ६४५॥

महदादिस्वरूपेण संस्थितः प्राकृते पदे ।
ब्रह्मादिदेवरूपैश्च श्रीरामः शरणं मम ॥ ६४६॥

मन्वादिनृपरूपेण श्रुतिमार्गं विभर्त्ति च ।
प्रजापतिस्वरूपेण श्रीरामः शरणं मम ॥ ६४७॥

ऋषिरूपेण यो देवो वन्यवृत्तिमपालयत् ।
योऽन्तरात्मा हि सर्वेषां श्रीरामः शरणं मम ॥ ६४८॥

योऽसौ सर्वतनुः सर्वः सर्वनामा सनातनः ।
अलिप्तः सर्वभावेषु श्रीरामः शरणं मम ॥ ६४९॥

बहिर्मर्त्त्यादिरूपेण सद्धर्ममनुपालयन् ।
परिपाति जनान् दीनान् श्रीरामः शरणं मम ॥ ६५०॥

यश्चात्मानं पृथक् कृत्य भक्तप्रेमवशं गतः ।
अर्चायामास्थितो देवः श्रीरामः शरणं मम ॥ ६५१॥

अर्चावताररूपेण दर्शनस्पर्शनादिभिः ।
दीनानुद्धरते योऽसौ श्रीरामः शरणं मम ॥ ६५२॥

इति ब्रह्मसंहितायां नारायणाभिभाषितः ।
परिपूर्णतमं ब्रह्म श्रीरामः पञ्चधा स्थितः ॥ ६५३॥

पञ्चधाऽवस्थितो रामः परव्यूहादिभेदतः ।
तस्मै परस्वरूपाय श्रीरामाय नमो नमः ॥ ६५४॥

स परः परधामस्थः सर्वावतारकारणम् ।
तस्मै परस्वरूपाय श्रीरामाय नमो नमः ॥ ६५५॥

दिव्यपरिकरायाथ दिव्यभूषणहेतये ।
दिव्यदेहगुणायाथ श्रीरामाय नमो नमः ॥ ६५६॥

श्रोसीतया हि युक्ताय नित्यमुक्तस्तुताय च ।
नित्यमुक्तैकभोग्याय श्रीरामाय नमो नमः ॥ ६५७॥

वेदवेद्यः परब्रह्म नित्यधामाधिनायकः ।
मुक्तप्राप्यश्च यस्तस्मै श्रीरामाय नमो नमः ॥ ६५८॥

सृष्ट्याद्यर्थं हि लोकानां स्वभक्तानुग्रहाय च ।
चतुर्व्यूहस्वरूपाय श्रीरामाय नमो नमः ॥ ६५९॥

उद्भूतषड्गुणः पूर्णो व्यूहः शान्ताब्धिवद्धि यः ।
वासुदेवात्मने तस्मै श्रीरामाय नमो नमः ॥ ६६०॥

व्यूहो यः कुरुते शास्त्रं ज्ञानाद् बलाच्च संहतिम् ।
सङ्कर्षणात्मने तस्मै श्रीरामाय नमो नमः ॥ ६६१॥

सृष्टिमैश्वर्यतो व्यूहो यो वीर्याद् धर्ममातनोत् ।
तस्मै प्रद्युम्नरूपाय श्रीरामाय नमो नमः ॥ ६६२॥

शक्त्या रक्षति यो व्यूहो ज्ञानं ददाति तेजसा ।
अनिरुद्धात्मने तस्मै श्रीरामाय नमो नमः ॥ ६६३॥

एभ्यो द्वादशसङ्ख्याका व्यूहाश्च सम्भवन्ति हि ।
तत्तद्व्यूहस्वरूपाय श्रीरामाय नमो नमः ॥ ६६४॥

चतुश्चक्रधरस्तत्र स्वर्णकान्तिर्हि केशवः ।
केशवव्यूहरूपाय श्रीरामाय नमो नमः ॥ ६६५॥

चतुःशङ्खधरः श्यामो व्यूहो नारायणः स्मृतः ।
नारायणस्वरूपाय श्रीरामाय नमो नमः ॥ ६६६॥

चतुर्गदाधरो व्यूहो मणिकान्तश्च माधवः ।
माधवव्यूहरूपाय श्रीरामाय नमो नमः ॥ ६६७॥

चतुःशार्ङ्गधरो व्यूहो गोविन्दश्च शशाङ्कवत् ।
गोविन्दव्यूहरूपाय श्रीरामाय नमो नमः ॥ ६६८॥

पथकेसरवद् विष्णुरचतुर्लाङ्गलधारकः ।

विष्णुव्यूहस्वरूपाय श्रीरामाय नमो नमः ॥ ६६९॥

चतुर्मुशलधर्त्ता हि पद्मवन्मधुसूदनः ।
मधुसूदनरूपाय श्रीरामाय नमो नमः ॥ ६७०॥

चतुःखड्गधरो व्यूहो वह्निवद्धि त्रिविक्रमः ।
त्रिविक्रमस्वरूपाय श्रीरामाय नमो नमः ॥ ६७१॥

चतुर्वज्रधरो व्यूह वामनो बालसूर्यवत् ।
वामनव्यूहरूपाय श्रीरामाय नमो नमः ॥ ६७२॥

चतुःपट्टिशधर्त्ता हि श्रीधरः पुण्डरीकवत् ।
श्रीधरव्यूहरूपाय श्रीरामाय नमो नमः ॥ ६७३॥

हृषीकेशस्वरूपाय श्री रामाय नमो नमः ॥ ६७४॥

विद्युत् कान्तिहृषीकेशश्चतुर्मुद्गरधारकः ।
पञ्चायुधधरो व्यूहो पद्मनाभश्च सूर्यवत् ।
पद्मनाभस्वरूपाय श्रीरामाय नमो नमः ॥ ६७५॥

चतुःपाशधरो दामोदरश्चाथेन्द्रगोपवत् ।
दामोदरस्वरूपाय श्रीरामाय नमो नमः ॥ ६७६॥

द्वादशादित्यदेवा हि चैते भालादिवृत्तयः ।
एतद्द्वादशरूपाय श्रीरामाय नमो नमः ॥ ६७७॥

तत्तद्देवादिरूपेण प्रादुर्भवति राघवः ।
तस्मै हि विभवाख्याय श्रीरामाय नमो नमः ॥ ६७८॥

शङ्खासुरमहन् रामो मत्स्यरूपं विधाय हि ।
तस्मै मत्स्यावताराय श्रीरामाय नमो नमः ॥ ६७९॥

मन्दरं धृतवान् रामो कूर्मरूपं विधाय हि ।
तस्मै कूर्मावताराय श्रीरामाय नमो नमः ॥ ६८०॥

हतो वाराहरूपेण हिरण्याक्षश्च शार्ङ्गिणा ।
तस्मै वराहरूपाय श्रीरामाय नमो नमः ॥ ६८१॥

हिरण्यकशिपुं चाहन् रामो नृसिंहरूपधृत् ।
तस्मै नृसिंहरूपाय श्रीरामाय नमो नमः ॥ ६८२॥

वामनरूपरामेण पातालं प्रापितो बलिः ।
तस्मै वामनरूपाय श्रीरामाय नमो नमः ॥ ६८३॥

अजयत् क्षत्रियान् रामः परशुरामरूपधृत् ।
तस्मै परशुरामाय श्रीरामाय नमो नमः ॥ ६८४॥

दाशरथितया रामो रावणं हतवानिह ।
तस्मै श्रीरामरूपाय श्रीरामाय नमो नमः ॥ ६८५॥

वासुदेवतया रामो कंसादीनवधीत् खलु ।
तस्मै श्रीकृष्णरूपाय श्रीरामाय नमो नमः ॥ ६८६॥

रामेण बुद्धरूपेण वञ्चितास्तामसा जनाः ।
तस्मै बुद्धस्वरूपाय श्रीरामाय नमो नमः ॥ ६८७॥

रामेण कल्किरूपेण शासिताः कलिशासकाः ।
तस्मै कल्किस्वरूपाय श्रीरामाय नमो नमः ॥ ६८८॥

रामो विभवरूपाणि बहूनि धृतवानिह ।
सर्वविभवरूपाय श्रीरामाय नमो नमः ॥ ६८९॥

हेतुरिच्छावतारे साधुत्राणादित्रयं फलम् ।
सर्वावतारिरूपाय श्रीरामाय नमो नमः ॥ ६९०॥

प्रविश्यान्तर्नियन्तृत्वं रामान्तर्यामिता मता ।
अन्तर्यामिस्वरूपाय श्रीरामाय नमो नमः ॥ ६९१॥

अङ्गीकृत्यतनुत्वेन हेमादिकं हि राघवः ।
भवत्यर्चातनुस्तस्मै श्रीरामाय नमो नमः ॥ ६९२॥

अमोघदर्शनो यश्च ह्यमोघस्तवनोऽपि यः ।
यश्चामोघार्चनस्तस्मै श्रीरामाय नमो नमः ॥ ६९३॥

सुलभो राघवो मूर्त्तौ सन्निधानादिहेतुतः ।
तस्मै चार्चावताराय श्रीरामाय नमो नमः ॥ ६९४॥

तुष्यति मेधया यो न तपसा नो न कर्मणा ।
भक्त्यैव तुष्यते तस्मै श्रीरामाय नमो नमः ॥ ६९५॥

भक्त्या योऽथ प्रपत्त्या च सन्तोषितो मुमुक्षुभिः ।
मोक्षप्रदायकस्तस्मै श्रीरामाय नमो नमः ॥ ६९६॥

यश्च सकृत्प्रपत्त्यैव सर्वेभ्यश्चाभयप्रदः ।
तस्मै श्रेष्ठशरण्याय श्रीरामाय नमो नमः ॥ ६९७॥

सम्प्राप्य राघवं मुक्तो जीवनावर्त्तते ततः ।
हारिणे सर्वभीतीनां श्रीरामाय नमो नमः ॥ ६९८॥

स्तवे वेदान्तसाराख्ये श्री सदानन्दनिर्मिते ।
एवं निरूपिता चास्ति पञ्चधा रामसंस्थितिः ॥ ६९९॥

श्रीरामोपासने पञ्चाधिकाराः शास्त्रसम्मताः ।
उपासितुश्च तत्रार्चोपासने चादिमो मतः ॥ ७००॥

विभवोपासने तस्य द्वितीयाधिकृतिः खलु ।
तृतीयश्चाधिकारो हि व्यूहस्योपासने मतः ॥ ७०१॥

उपासने तुरीयस्तु परस्य राघवस्य हि ।
अन्तःस्थस्य च रामस्योपासने पञ्चमो मतः ॥ ७०२॥

प्रकृति ः

प्रमाया विषयो यत् तत् प्रमेयं सम्मतं बुधैः ।
द्रव्याद्रव्यत्वभेदेन प्रमेयं द्विविधं मतम् ॥ ७०३॥

द्रव्यत्वेन मतं प्राज्ञैः प्रमेयं हि गुणाश्रयः ।
रूपीघटः प्रतीतेश्च द्रव्यं निर्धर्मकं न हि ॥ ७०४॥

आगन्तुकापृथक्सिद्धधर्माश्रयस्य द्रव्यता ।
जीवब्रह्मप्रधानादिभेदाद द्रव्यं च षड्विधम् ॥ ७०५॥

जडाजडत्वभेदेन द्विधा तच्च प्रकीर्त्तितम् ।
शून्यं रजस्तमोभ्यां यत् सत्वं तद्रहितं जडम् ॥ ७०६॥

प्रकृतिकालभेदेन जडं द्विधा समीरितम् ।
चैतन्यरहितं द्रव्यं प्रकृतिः सा गुणत्रया ॥ ७०७॥

सत्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।
निबन्धाति महाबाहो ! देहे देहिनमव्ययम् ॥ ७०८॥

तत्र सत्वं निर्मलत्वात् प्रकाशकमनामयम् ।
सुखसङ्गेन तन्निबध्नाति बन्धाति ज्ञानसङ्गेन चानघ ॥ ७०९॥

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७१०॥

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ७११॥

सत्वं सुखे सञ्जयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ७१२॥

सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्याद् विवृद्धं सत्वमित्युत ॥ ७१३॥

लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भारतर्षभ ॥ ७१४॥

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ ७१५॥

त्रयः सत्वादयश्चैवं गीतायां प्रकृतेर्गुणाः ।
एतेषां च गुणानां हि साम्यं प्रकृतिलक्षणम् ॥ ७१६॥

अवैषम्यं मतं साम्यं वैषम्यं विकृतौ मतम् ।
विकाराँश्च करीत्यस्या ईशस्तत् प्रकृतिर्हि सा ॥ ७१७॥

विकृतित्वं विना तत्र प्रकृतित्वं हि वर्त्तते ।
क्षरं प्रधानमित्युक्तया क्षरं सा क्षरणान्मता ॥ ७१८॥

विचित्रसृष्टिहेतुत्वादियं मायेति कथ्यते ।
अविद्यापदवाच्येयं विद्याविरोधिताऽत्र यत् ॥ ७१९॥

महदादितयाऽव्यक्ता ततोऽव्यक्ततया मता ।
प्रथमश्च विकारोऽस्या महत्तत्त्वतया मतः ॥ ७२०॥

अव्यक्तदेहिरामस्य चावस्था स प्रकीर्तितः ।
सत्वादिगुणभेदात् स त्रिविधः समुदीरितः ॥ ७२१॥

बुद्धावध्यवसायेऽस्य साङ्ख्यैः पर्यायता मता ।
आत्मधर्मौ च तौ तस्मादुपपन्ना न सा खलु ॥ ७२२॥

प्रथमश्च विकारोऽस्याहङ्कारस्त्रिविधस्तथा ।
महच्छरीरिरामस्यावस्था सङ्कल्पतो हि सा ॥ ७२३॥

तस्याभिमानता नो यज् ज्ञानत्वं नास्ति तत्र हि ।
देहाहम्भावहेतुत्वादस्याहङ्कारवाच्यता ॥ ७२४॥

शास्त्रे चैते प्रसिद्धाश्चाहङ्काराः सात्विकादयः ।
वैकारिकस्तैजसश्च भूतादिरितिसंज्ञा ॥ ७२५॥

तैजससहकाराच्च भूतादेः समजायत ।
शब्दतन्मात्रकं तस्माद् भूतमाकाशसंज्ञकम् ॥ ७२६॥

भूताव्यवहितं पूर्वं द्रव्यं तन्मात्रसंज्ञकम् ।
तन्मात्राव्यवधानेन जातं द्रव्यं यदुत्तरम् ॥ ७२७॥

महाभूतं हि तत्प्रोक्तं प्राज्ञैः तत्त्वोपदेशकैः ।
उपादानं हि तन्मात्रं भूते तन्मात्र कार्यता ॥ ७२८॥

त्रिविधोऽयमहङ्कारो महत्तत्त्वादजायत् ।
भूतेन्द्रियाणां हेतुस्स त्रिगुणत्वान्महामुने ॥ ७२९॥

यथा प्रधानेन महान् महता स तथावृतः ।
भूतादिस्तु विकुर्वाणः शब्दतन्मात्रकं ततः ॥ ७३०॥

ससर्ज शब्दतन्मात्रादाकाशं शब्दलक्षणम् ।
शब्दमात्रं तथाकाशं भूतादिः स समावृणोत् ॥ ७३१॥

आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज ह ।
बलवानभवद् वायुस्तस्य स्पर्शो गुणो मतः ॥ ७३२॥

आकाशं शब्दमात्रं तु स्पर्शमात्रं समावृणोत् ।
ततो वायुर्विकुर्वाणो रूपमात्रं ससर्ज ह् ॥ ७३३॥

ज्योतिरुत्पद्यते वायोस्तद् रूपगुणमुच्यते ।
स्पर्शमात्रं तु वै वायू रूपमात्रं समावृणोत् ॥ ७३४॥

ज्योतिश्चापि विकुर्वाणं रसमात्रं ससर्ज ह ।
सम्भवन्ति ततोऽम्भांसि रसाधाराणि तानि च ॥ ७३५॥

रसमात्राणि चाम्भांसि रूपमात्र समावृणोत् ।
विकुर्वाणानि चाम्भांसि गन्धमात्रं ससर्जिरे ॥ ७३६॥

सङ्घाते जायते तस्मात् तस्य गन्धो गुणो मतः ।

तस्मिंस्तस्मिंस्तु तन्मात्रं तेन तन्मात्रता स्मृता ॥ ७३७॥

तन्मात्राण्यविशेषाणि अविशेषास्ततो हि ते ।
न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः ॥ ७३८॥

भूततन्मात्र सर्गोऽयमहङ्कारात्तु तामसात् ।
एवं विष्णुपुराणोक्तं भूततन्मात्रपञ्चकम् ॥ ७३९॥

शब्दस्पर्शादिभेदैश्च तन्मात्रं पञ्चधा मतम् ।
आकाशादिविभेदैश्च महाभूतं हि पञ्चधा ॥ ७४०॥

अनुद्भूताश्च तन्मात्रे शब्दादयो गुणा मताः ।
महाभूतेषु तद्भूताः सन्ति शब्दादिका गुणाः ॥ ७४१॥

स्पर्शेन रहितं द्रव्यमुद्भूतशब्दवन्नभः ।
पतगपतनाधाररूपेण खं हि चाक्षुषम् ॥ ७४२॥

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुरितिप्रामाण्यादनित्यत्वं च खस्य हि ॥ ७४३॥

खस्य सावयवत्वं हि पञ्चीकरणतो मतम् ।
तत एव तथाऽऽकाशे नीलरूपं हि दृश्यते ॥ ७४४॥

इन्द्रियाणां न भूतानि हेतवः पोषकानि तु ।
दिग्व्यवहारहेतुश्च श्रोत्रस्याप्यायकं हि खम् ॥ ७४५॥

आकाशात् स्पर्शतन्मात्रं ततो वायुरजायत ।
आकाशवायुमध्यस्थं तन्मात्रं स्पर्शसंज्ञकम् ॥ ७४६॥

अनुद्भूतो मतः स्पर्शस्तन्मात्रे स्पर्शसंज्ञके ।
उदभूतस्पर्शवान् वायू रूपेण रहितः स च ॥ ७४७॥

त्वङ्मात्रग्राह्यता वायौ शब्दस्पर्शौ गुणौ तथा ।
स्पर्शो वायुपृथिव्योश्चानुष्णाशीतो हि वर्त्तते ॥ ७४८॥

नीरादियोगतो वायौ। शीतादिप्रत्ययस्तथा ।
आप्यायकस्त्वचो वायुर्विद्वद्भिः सम्प्रकीर्त्तितः ॥ ७४९॥

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुरितिप्रामाण्याद् वायोरनित्यता मता ॥ ७५०॥

उक्तश्श्रुतौ पृथग् वायोः प्राणस्य चोपदेशतः ।
जीवधारणसामर्थ्यात् प्राणो वायुर्विलक्षणः ॥ ७५१ ॥

जीवोपकरणं प्राणः सहोक्तेर्मनादिभिः ।
अणुश्चोत्क्रान्तितः प्राणो न विभुः सूत्रकृन्मते ॥ ७५२ ॥

इन्द्रियाणां च सत्तासु या प्राणाधीनता ततः ।
विद्भिः सम्मता तेषु प्राणशब्दाभिधेयता ॥ ७५३ ॥

इन्द्रियापरतन्त्रत्वात् प्राणे नेन्द्रियवाच्यता ।
शरीरमध्यसञ्चारी वायुः प्राणतया मतः ॥ ७५४ ॥

हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले ।
उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः ॥ ७५५ ॥

स्थानपञ्चकसंस्थश्च प्राणस्त्वेवं प्रकीर्त्तितः ।
ततश्च पञ्चवृत्त्यादि सूत्रकारेण सूत्रितम् ॥ ७५६ ॥

तन्मात्रं रूपसंज्ञं हि मध्यगं वायुतेजसोः ।
तेजो भूतं ततो जातं पोषकं तद्धि चक्षुषः ॥ ७५७ ॥

उष्णस्पर्शवत्तेजः पाचकोऽर्कादिरूपतः ।
आलोकादिकरूपेण चाक्षुषे सहकारकम् ॥ ७५८ ॥

चतुर्धा भौमदिव्यौदर्याकरजविभेदतः ।
भौमं दीपादिकं दिव्यं वारिमात्रेन्धनं तथा ॥ ७५९ ॥

आकरजं सुवर्णादि चौदर्यं जठरानलः ।
प्रभाप्रभाविशिष्टेतिभेदात् तेजो द्विधा पुनः ॥ ७६० ॥

द्रव्यगुणस्वरूपाथ सावयवा मता प्रभा ।
शब्दः स्पर्शश्च रूपं च तेजोगुणाः प्रकीर्त्तिताः ॥ ७६१ ॥

तन्मात्रं रससंज्ञं हि मध्यगं जलतेजसोः ।
शीतस्पर्गविशिष्टं च तस्माज्जलमजायत ॥ ७६२ ॥

बहुधाऽब्ध्यादिरूपं च पिण्डादिकारकं हि तत् ।
शब्दोऽभास्वरशुक्लं च रूपं च मधुरो रसः ॥ ७६३ ॥

जलाच्च गन्धतन्मात्रं ततो जाता वसुन्धरा ।
उद्भूतगन्धवत्त्वं हि पृथिव्या लक्षणं मतम् ॥ ७६५ ॥

शब्दः स्पर्शश्च रूपं च रसो गन्धो गुणाः क्षितौ ।
घ्राणस्य मनसश्चाथ पोषिका पृथिवी मता ॥ ७६६॥

मृदादिभेदतोऽनेकप्रकारशालिनी क्षितिः ।
स्पर्शादयस्तु चत्वारः पृथिव्यां पाकजा गुणाः ॥ ७६७॥

अन्तर्भावो पृथिव्यां हि तमसो मन्यते बुधैः ।
क्षिते रूपं तथाऽवस्था यतस्तमसि दृश्यते ॥ ७६८॥

रामेण सर्वभूतानां कृत्वा भागद्वयं समम् ।
अर्धभागचतुर्थांशाः स्वभिन्नार्धेषु योजिताः ॥ ७६९॥

पञ्चीकृतं हि रामेण भूतं जगत्सिसृक्षुणा ।
स्वभागस्याधिकत्वाच्च स्वनाम्ना व्यपदिश्यते ॥ ७७०॥

पञ्चीकृतैश्च भूतैश्च रामश्चाण्डं चकार हि ।
ततश्चोत्पाद्य ब्रह्माणं तद्वारा कृतवाञ् जगत् ॥ ७७१॥

ततो लीलार्थमात्मानं बहकल्पयदीश्वरः ।
अथ प्रधानमसृजत् पुरुषाधिष्ठितं स्वतः ॥ ७७२॥

ततो महान्तमव्यक्ताज्जनयामास नारद ।
गुणत्रयात्मकं तस्मादहङ्कारमतः परम् ॥ ७७३॥

इन्द्रियाणि दशैतानि ज्ञानकर्मात्मकानि वै ।
मनश्च सात्विकात् तस्मादहङ्कारादजीजनत् ॥ ७७४॥

भूतानि भूतसूक्ष्माणि दशैतानि महामुने ।
असृजत्तामसात् तस्मादहङ्कारराज्जनार्दनः ॥ ७७५॥

महदादिविशेषान्तरेतैरण्डमजीजनत् ।
दशोत्तरैरावरणैः सप्तभिः परिवेष्टितम् ॥ ७७६॥

तस्मिन्नण्डे स्वयं विष्णुः प्रजापतिमथाकरोत् ।
उच्चावचानां भूतानां कर्त्तारं निजशक्तिभिः ॥ ७७७॥

हरिः स्वशक्तिरूपेण कालेन च समन्वितः ।
महदादिषु सृज्येषु सृष्टिं चक्रे जगन्मयः ॥ ७७८॥

विष्णुर्ब्रह्मापदेशेन चिदचिन्मिश्रितं जगत् ।

विचित्रं जनयामास तत्तच्छक्तिसमन्वितः ॥ ७७९॥

वेदानालोच्य भूतानां देवादीनां यमः प्रभुः ।
नामरूपे च विविधे यथापूर्वमकल्पयत् ॥ ७८०॥

सर्वेदावप्तसकलकामोऽपि परमेश्वरः ।
जन्तुभिर्निजसृष्टैश्च लीलारसमथान्वभूत् ॥ ७८१॥

अनालोच्यैव जगतां त्रातारमपरं हरिः ।
स्वयमेवांशरूपेण पालयत्यखिलं जगत् ॥ ७८२॥

अहिर्बुध्न्यसंहितायां सृष्टिरेवं प्रदर्शिता ।
समष्टिसृष्टिरण्डान्ता रामेणाद्वारका कृता ॥ ७८३॥

ब्रह्मादिद्वारका चाथ व्यष्टिसृष्टिर्विनिर्मिता ।
असन्दिग्धो जगत्स्रष्टा श्रीरामस्तद् बुधैर्मतः ॥ ७८४॥

नियमेन नियाम्यं यद् द्रव्यं तु चेतनेन हि ।
चेतनस्य तु तस्यात्र शरीर तत् प्रकीर्त्तितम् ॥ ७८५॥

द्रव्यमीशेशबुद्धिभ्यां भिन्नं शरीरमीरितम् ।
तटस्थं लक्षण चैतच्छरीरस्य मतं बुधैः ॥ ७८६॥

नित्यानित्यत्वभेदेन शरीरं द्विविधं मतम् ।
प्रकृतिश्च तथा कालो जीवो शुभाश्रयस्तथा ॥ ७८७॥

एतानीशशराणि नित्यत्वेन मतानि हि ।
कर्माकर्मकृतत्वाभ्यामनित्यं द्विविधं स्मृतम् ॥ ७८८॥

आद्यं च द्विविधं कर्मसङ्कल्पजं च कर्मजम् ।
सौभरिप्रभृतेश्चाद्यमन्त्यमन्यशरीरिणाम् ॥ ७८९॥

अन्त्यं सर्वेश्वरस्यात्र मदादिकमीरितम् ।
यानि च नित्यमुक्तैस्तु स्वेच्छया स्वीकृतानि हि ॥ ७९०॥

स्थावरं जङ्गमं चेतिभेदाच्च द्विविधं पुनः ।
शिलावृक्षादयस्तत्र चादिमं सम्मतं बुधैः ॥ ७९१॥

अन्तिमं तु चतुर्धाऽथ विद्वद्भिः सम्प्रकीर्त्तितम् ।
नरनारकिभेदाच्च तिर्यग्देवविभेदतः ॥ ७९२॥

योनिजायोनिजत्वाभ्यां शरीरं द्विविधं पुनः ।
योनिजमस्मदादीनां द्रौपद्यादेरयोनिजम् ॥ ७९३॥

उद्भिज्जादिविभेदाच्च शरीरं हि चतुर्विधम् ।
उद्भिज्जं शाखिनां तत्र यूकादीनां तु स्वेदजम् ॥ ७९४॥

अण्डजं भुजगादीनामस्मदादेर्जरायुजम् ।
शरीरं वेदितव्यं हि देहतत्त्वबुभुत्सुभिः ॥ ७९५॥

पञ्चतन्मात्रसाहाय्यादहङ्काराच्च सात्विकात् ।
श्रोत्रादिकं समुत्पन्नं ज्ञानेन्द्रियं तु पञ्च हि ॥ ७९६॥

द्रव्यं तदिन्द्रियं बोध्यं देहप्राणेतरच्च यत् ।
आत्मप्रयत्नजातस्य व्यापारस्याश्रयस्तथा ॥ ७९७॥

प्राकृताप्राकृतत्वाभ्यमिन्द्रियं द्विविधं मतम् ।
शून्यं रजस्तमोभ्यां यच्चाप्राकृतं तदिन्द्रियम् ॥ ७९८॥

तद्भिन्नं प्राकृतं वेद्यमिन्द्रियं हि बुभुत्सुभिः ।
ज्ञानकर्मेन्द्रियत्वाभ्यामिन्द्रियं द्विविधं पुनः ॥ ७९९॥

मनःसृष्टिस्तु जाता हि केवलात् सात्विकादिह् ।
प्रोक्तं ज्ञानेन्द्रियत्वं च मनसस्तत्त्ववेदिभिः ॥ ८००॥

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
ज्ञानेन्द्रियं मनश्चैवं पाठाज् ज्ञानेन्द्रियैः सह ॥ ८०१॥

ज्ञानप्रसरणे शक्तमिन्द्रियं ज्ञानसंज्ञकम् ।
हृदयस्थं मनस्तत्र श्रोत्रं कर्णविहायसि ॥ ८०२॥

भुजगानां तु नेत्रे तत् सर्वदेहे त्वगिन्द्रियम् ।
चक्षुस्तु कृष्णातारात्रे जिह्वाग्रे रसनं स्थितम् ॥ ८०३॥

घ्राणेन्द्रियं तु नासाया अग्रभागे हि तिष्ठति ।
एवं ज्ञानेन्द्रियं षोढा सम्प्रोक्तं तत्वचिन्तकैः ॥ ८०४॥

ग्राह्या अर्थास्त्विन्द्रियाणां विषया सम्मता बुधैः ।
एषां संयोगतश्चाथ संयुक्ताश्रयणाद् ग्रहः ॥ ८०५॥

शब्दः श्रोत्रं तथा खादित्रयमाकाशसम्भवम् ।
वायोः स्पर्शस्तथा चेष्टा त्वक्चैव तृतयं स्मृतम् ॥ ८०६॥

इत्यादौत्विन्द्रियाणां च भौतिकत्वं न सम्मतम् ।
किन्तु भूतेषु तेषां हि पोषकता समीरिता ॥ ८०७॥

श्रुतावापोमयः प्राणः एवं पोषकता जले ।
प्राणस्य जलकार्यत्वमन्यथा सम्भवेदिह ॥ ८०८॥

आप्यायन्ते च ते नित्यं तद्रवस्थैस्तु पञ्चभिः ।
भूतेषु पोषकत्वं हि मोक्षधर्मे ततस्त्विति ॥ ८०९॥

श्रोत्रादीन्द्रियसाहाय्यादहङ्काराच्च सात्विकात् ।
वागादिकं समुत्पन्नं कर्मेन्द्रियं च पञ्च हि ॥ ८१०॥

उच्चारणादिहेतुस्तु कर्मेन्द्रियं मतं बुधैः ।
अङ्गुल्यग्रे स्थितः पाणिः शुण्डवृत्तिः स हस्तिनः ॥ ८११॥

पक्ष्यादेरथ पक्षादौ पादे पादेन्द्रियं स्थितम् ।
मेहनादावुपस्थश्च पायुर्गुदे हि संस्थितः ॥ ८१२॥

मान्थालादेर्मुखादौ हि पायुश्च संस्थितस्तथा ।
एकादशेन्द्रियाण्यस्मात्सिद्धान्ते सम्मतानि वै ॥ ८१३॥

आन्तरबाह्यभेदाभ्यामिन्द्रियं द्विविधं पुनः ।
आन्तरं तु मनस्तत्र बाह्यानि चेतराणि हि ॥ ८१४॥

इन्द्रियाणां च कथ्यन्ते विषया देवतास्तथा ।
अन्तःकरणभेदाच्च चत्वारो मन आदयः ॥ ८१५॥

सङ्कल्पो विषयश्चेन्द्रो देवो हि मनसो मतः ।
निश्चयो विषयो देवो बुद्धेर्मतो बृहस्पतिः ॥ ८१६॥

चिन्तनं विषयो देवो वासुदेवो हि चेतसः ।
विषयोऽहङ्कृतेर्गर्वो देवो रुद्रः प्रकीर्त्तितः ॥ ८१७॥

श्रोत्रस्य विषयः शब्दो देवता दिक् प्रभाषिता ।
त्वचश्च विषयः स्पर्शो देवश्चोक्तः समीरणः ॥ ८१८॥

चक्षुषो विषयो रूपं देवो सूर्यः समीरितः ।
विषयो रसनाया हि रसश्च वरुणः सुरः ॥ ८१९॥

गन्धाश्विनीकुमारौ च घ्राणस्य विषयामरौ ।

भाषणं विषयो वाचो देवोऽनलः प्रकीर्त्तितः ॥ ८२० ॥

ग्रहणं विषयः पाणेर्विष्णुर्देवः प्रभाषितः ।
गमनं विषयश्चाथ पादस्येन्द्रः सुरो मतः ॥ ८२१ ॥

पायोः प्रजापतिर्देवो विषयो मलमुञ्चनम् ।
उपस्थस्य यमो देवो मैथुनं विषयो मतः ॥ ८२२ ॥

दशेमे पुरुषे प्राणा आत्मैकादश च श्रुतौ ।
एकादशेन्द्रियं प्रोक्तं ततो न्यूनं न चाधिकम् ॥ ८२३ ॥

इन्द्रियं प्राणवाच्यं चात्रात्मवाच्यं मनस्तथा ।
उत्क्रमणात् समे प्राणाश्चाणवो गतिशालिनः ॥ ८२४ ॥

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
इत्येतत्कथनात् प्राणा अनित्या एव सम्मताः ॥ ८२५ ॥

काल ः

गुणत्रयेण हीनो यद् द्रव्यं कालो जडः स च ।
प्राकृतेषु च कार्येषु रामः कालमपेक्षते ॥ ८२६ ॥

नित्यधाम्नि स सर्वेशः कालं नैवावलम्बते ।
कालश्च द्विविधो ज्ञेयः खण्डाखण्डविभेदतः ॥ ८२७ ॥

अन्त्यो विभुश्च भूतादिव्यवहारस्य कारणम् ।
सामान्यस्य तु कार्यस्यायं सहकारिकारणम् ॥ ८२८ ॥

नित्यश्चायं स्वकार्यस्योपादानकारणं मतम् ।
नित्यस्यास्य विकारस्तु नामान्तरग्रहार्हता ॥ ८२९ ॥

अखण्डकालकार्यस्तु खण्डकालो बुधैर्मतः ।
स चानित्यो निमेषादितत्तन्नाम्ना प्रकीर्त्तितः ॥ ८३० ॥

पञ्चदशनिमेषैश्च ह्येकाकाष्ठा मता बुधैः ।
त्रिंशता चाथ काष्ठाभिः कला चैका मता तथा ॥ ८३१ ॥

त्रिंशता च कलाभिस्तु मुहूर्त्तं सम्मतं बुधैः ।
त्रिंशता च मुहूर्तैस्तु दिवसो मानवो मतः ॥ ८३२ ॥

पञ्चदशादिनैः पक्षो मासः पक्षद्वयं स्मृतः ।
मासद्वयमृतुश्चैकश्चायनमृतवस्त्रयः ॥ ८३३ ॥

अयनाभ्यां तथा द्वाभ्यां चैकः संवत्सरो मतः ।
पितॄणां च दिनं चैकं मासद्वयं हि मानवम् ॥ ८३४॥

संवत्सरं मनुष्याणां देवानां हि दिनं स्मृतम् ।
अयनमुत्तरं तेषामहश्च सम्प्रकीर्त्तितम् ॥ ८३५॥

दक्षिणमयनं चाथ तेषां रात्रिः समीरिता ।
द्वादशवर्षसहस्रं देवानां तु चतुर्युगम् ॥ ८३६॥

चतुःसहस्रवर्षाणां तत्र कृतयुगं मतम् ।
त्रयं सहस्रवर्षाणां त्रेतायुगं समीरितम् ॥ ८३७॥

द्विसहस्रमितं वर्षं द्वापरं कथयन्ति हि ।
सहस्रवर्षसङ्ख्याकं मतं कलयुगं तथा ॥ ८३८॥

पूर्णो धर्मः कृते युगे त्रेतायां तु त्रिपात् स्मृतः ।
द्वापरे सार्धपादोऽथ चैकपादः कलौ तु सः ॥ ८३९॥

द्विसहस्रमितं वर्षं सन्धिश्चैषां प्रकीर्त्तिता ।
चतुर्युगसहस्रं हि ब्रह्मणो दिवसो मतः ॥ ८४०॥

तावत्प्रमाणिकी रात्रिर्विद्वद्भिर्व्याहृतां तथा ।
चतुर्दशमिताः कल्पे मनवो ब्रह्मणो दिने ॥ ८४१॥

इन्द्राः सप्तर्षयश्चाथ तावन्तः परिभाषिताः ।
ब्रह्मा चापि स्वमानेन शतं वर्षाणि जीवति ॥ ८४२॥

कालाधीनमदः सर्वं तथा च प्रलयत्रयम् ।
योऽयं सन्दृश्यते नूनं नित्यं लोके क्षयस्त्विह ॥ ८४३॥

नित्यः सङ्कीर्त्यते नाम्ना मुनिभिः प्रतिसञ्चरः ।
ब्राह्मो नैमित्तिको नाम कल्पान्ते यो भविष्यति ॥ ८४४॥

त्रैलोक्यस्यास्यः कथितः प्रतिसर्गो मनीषिभिः ।
महदादिविशेषान्तं यदा संयाति सङ्क्षयम् ॥ ८४५॥

प्राकृतः प्रतिसर्गोऽयं प्रोच्यते कालचिन्तकैः ।
एवं कूर्मपुराणे हि सम्प्रोक्तं प्रलयत्रयम् ॥ ८४६॥

नित्यधामेतरज् ज्ञानमजडद्रव्यमचेतनम् ।

घटाद्यर्थप्रकाशानामसाधारणकारणम् ॥ ८४७॥

प्रसृत्य चेद्रियद्वारा द्रव्येण युज्यते ततः ।
गुणक्रियाविशिष्टत्वाज् ज्ञानस्य द्रव्यता मता ॥ ८४८॥

अहं जानामि चेत्येषा प्रतीतिर्जायते ततः ।
अपृथक्सिद्धधर्मश्च ज्ञानं जीवपरात्मनोः ॥ ८४९॥

सङ्कोचं च विकासं च तदाप्नोति यथा प्रभा ।
नष्टोत्पन्नप्रतीतिस्तु जायते तत एव च ॥ ८५०॥

ज्ञानं सङ्कुचितं बद्धे विभु मुक्तपरेशयोः ।
ज्ञाने दैवेन सङ्कोचो दैवाभावे विकासिता ॥ ८५१॥

प्रसृतत्वं च प्रज्ञायाः श्वेताश्वतरसम्मतम् ।
ज्ञानावृतिश्च गीतायामावृतं ज्ञानमित्यथ ॥ ८५२॥

सुखरूपं च नित्यं च कालभिन्नं पराक् तथा ।
नित्यात्मनो गुणो ज्ञानं स्वरूपस्य निरूपकः ॥ ८५३॥

सुषुप्तौ तमसाच्छन्नं तद् भवेत्तु तिरोहितम् ।
सङ्कोचश्च विकासश्च सर्पकुण्डलवत् खलु ॥ ८५४॥

ज्ञाने स्वतश्च प्रामाण्यमप्रामाण्यं परेण तु ।
धारावाहिकविज्ञानमेकमेव हि सम्मतम् ॥ ८५५॥

उपाधिभेदतो बुद्धिः सुखदुःखादिरूपिणी ।
ज्ञानावस्थाविशेषाश्च भक्त्तयादयः प्रकीर्त्तिताः ॥ ८५६॥

भक्तेश्चाथ प्रपत्तेश्च मुक्तिसाधनता मता ।
मोक्षे नैव प्रवर्त्तन्ते शरीरात्मत्ववादिनः ॥ ८५७॥

आत्मत्वे क्षणिकज्ञाने मते मुक्तौ तिश्च न ।
कथं मुक्तौ प्रवृत्ताश्च स्युरनेकान्तवादिनः ॥ ८५८॥

मोक्षे पाषाणकल्पे च प्रवृत्तिः स्यान्न कस्यचित् ।
साङ्ख्यमुक्तौ प्रवृत्तिर्न मुक्तिसम्बन्धिसंशयात् ॥ ८५९॥

व्यावहारिकवाक्याच्च सत्याभेदमतिर्न यत् ।
प्रवृत्तिर्न भवेन्मुक्तौ मायिनां च मते ततः ॥ ८६०॥

एषोणुरात्मैष द्रष्टा इत्यादिश्रुतिमानतः ।
अणुश्च चेतनो जीवो द्रव्यरूपो मतो बुधैः ॥ ८६१॥

आत्मा निष्क्रामतीत्येवमुत्क्रान्तिश्चात्मनः श्रुताम् ।
गमनाच्चन्द्रलोके च जीवे गतिः समीरिता ॥ ८६२॥

तस्माल्लोकात् पुनश्चैवमागतिस्त्वात्मनः श्रुतौ ।
एवमुत्क्रान्तिगत्यादेजीवोऽणुर्मन्यते बुधैः ॥ ८६३॥

जीवोत्क्रान्त्यादयो न स्युर्विभुत्वे सम्मते खलु ।
उत्क्रान्तिगत्यागतीनां व्यासेन सूत्रितं ततः ॥ ८६४॥

ज्ञानस्यानन्त्यतश्चैव ह्यानन्त्यश्रुतिसङ्गतिः ।
ज्ञानेन धर्मभूतेन भोगश्च सर्ववर्ष्मणि ॥ ८६५॥

प्रभाया भित्तिसम्बद्धाया यथा दीपधर्मता ।
ज्ञाने भालादिसम्बद्धेऽप्यात्मसम्बद्धता तथा ॥ ८६६॥

योगिनां बहुदेहानां ज्ञानेनैव च धारणम् ।
तत्कारणं तु बोद्धव्यं योगबलं हि योगिनाम् ॥ ८६७॥

विलक्षणं हि संयोगः ज्ञानप्रसरणं मतम् ।
सुषुप्तावनपायत्वात् तत्तद्देहधृतिस्ततः ॥ ८६८॥

विप्रकृष्टे प्रदेशे तु भोगोत्पादः कथं ननु ।
मैवं यतः स उत्पादो रामेच्छा दैवसत्तया ॥ ८६९॥

चेतसा वेदितव्यः इत्येतच्छ्रुतेः प्रमाणतः ।
अणोर्मानसप्रत्यक्षं जीवस्य चोपपद्यते ॥ ८७०॥

आत्मसुखादिकाध्यक्षे महत्त्वं कारणं न तत् ।
आत्माणुत्वे ततः काचिदापत्तिर्विद्यते न हि ॥ ८७१॥

हृद्यन्तर्ज्योतिरित्येवं हृत्स्थो जीवोऽजडः श्रुतौ ।
भालादिसुखदुःखे च जीवश्चात्रावगच्छति ॥ ८७२॥

शरीरपरिमाणस्तज्जीवः सर्वशरीरगः ।
जैना इति वदन्त्यत्र तद् वरं न कुतो यतः ॥ ८७३॥

अल्पदेहे बृहद्देहात् प्रवेशेऽपूर्णताऽऽत्मनः ।
योगिनं परकाये च प्रवेशः सम्भवेन्न हि ॥ ८७४॥

सङ्कोचे च विकासे तु स्यादात्मनो विकारिता ।
विकारित्वादनित्यत्वं घटवदात्मनो भवेत् ॥ ८७५॥

तथात्वे कृतनाशश्चाकृतस्याभ्यागमस्तथा ।
भालादिसुखदुःखादिभानं ज्ञानान्मतं ततः ॥ ८७६॥

स्थूलश्चाहं हि गच्छामि प्रत्ययाच्चेतनस्तनुः ।
मृते देहे तु चैतन्यं प्राणनिर्गमनान्न हि ॥ ८७७॥

इति चेन्न वरं चैतद् विकल्पासहता यतः ।
देहस्यावयवे तच्चैकस्मिन् सर्वेषु वाऽस्ति हि ॥ ८७८॥

नाद्यः प्रतीयते यस्माच्चैतन्यमितरत्र च ।
बहुचेतनवत्त्वं स्यादन्त्ये चैकतनावथ ॥ ८७९॥

उच्छेदो व्यहारस्य वैमत्ये च मिथो भवेत् ।
हस्ताद्यन्यतमोच्छेदे स्मृतेश्चानुपपन्नता ॥ ८८०॥

सङ्घातरूपवत्त्वान्नत्वात्मा तनुर्यथा घटः ।
देहस्यानात्मता सिद्धा चेत्येवमनुमानतः ॥ ८८१॥

मम देहः प्रतीतेश्च नात्मता मन्यते तनोः ।
अनित्यत्वाज्जडत्वाच्च शरीरस्यात्मता न हि ॥ ८८२॥

इन्द्रियस्य न चात्मत्वं ममेन्द्रियं प्रतीतितः ।
जीवत्वं न च नेत्रादेस्तच्छून्ये जीव्यते यतः ॥ ८८३॥

मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
भोगोपकरणं चैवं तस्मादात्मा मनो न हि ॥ ८८४॥

मम प्राणः प्रतीतेश्च प्राणस्य चात्मता न हि ।
प्राणोऽस्मीति श्रुतौ चोक्तः प्राणदेही परेश्वरः ॥ ८८५॥

अहं जानामि चेत्यत्राहमर्थस्यात्मता खलु ।
तस्य धर्मतया ज्ञाते ज्ञाने सा न कथञ्चन ॥ ८८६॥

अजडजीवजीवत्वं प्रकृत्यादौ जडे न च ।
अणुजीवस्य जीवत्वं विभावीशे न सिध्यति ॥ ८८७॥

तनु जीवत्वमापन्नं विभु ब्रह्म ह्यविद्यया ।

इति चेन्न यतो जीवोऽजन्मा नित्यः श्रुतौ श्रुतः ॥ ८८८॥

जन्ममृत्यू कथं स्यातामात्मनो नित्यता यदि ।
समीचीनं न चैतद्धि कुतश्चेदुच्यते यतः ॥ ८८९॥

देहात्मनोश्च संयोगवियोगौ कर्मयोगतः ।
जन्मात्मनः स संयोगो वियोगो मृत्युसंज्ञकः ॥ ८९०॥

जीवदोषा न चैवं तु ब्रह्मणि सम्भवन्ति हि ।
जीवब्रह्मविभेदे न भेदश्रुतिविरोधिता ॥ ८९१॥

मुक्तावपि च जीवात्मा जगद्व्यापारवर्जितः ।
ततो न शक्यते वक्तुमभेदो ब्रह्मजीवयोः ॥ ८९२॥

जीवब्रह्मविभेदे नाभेदश्रुतिविरोधिता ।
जीवो ब्रह्मापृथक्सिद्धस्ततोऽभेदस्तयोर्यतः ॥ ८९३॥

कपिलस्य मते जीवे स्वीकृता ज्ञानमात्रता ।
अङ्गीकर्त्तुमशक्या सा कुतश्चेत् तन्मते यतः ॥ ८९४॥

इन्द्रियाणां च वैयर्थ्यं स्वापे ज्ञानं प्रसज्यते ।
तार्किकैस्तन् मतो जीवोऽचिदागन्तुकबुद्धिमान् ॥ ८९५॥

तच्च श्रुतिविरुद्धं हि विज्ञानात्मा श्रुतिर्यतः ।
स्वेन रूपेण किञ्चैवं मुक्तौ स्वंरूपमाप्यते ॥ ८९६॥

मोक्षे तत् कः प्रवर्तेत तेषां पाषाणसन्निभे ।
ततो ज्ञानस्वरूपात्मा विभुर्ज्ञान च तद्गुणः ॥ ८९७॥

ज्ञानस्वरूपमत्यन्तं निर्मलं परमार्थतः ।
एवं विष्णुपुराणे हि ज्ञानस्वरूपतात्मनः ॥ ८९८॥

मन्ता बोद्धेति प्रामाण्याज् ज्ञाता जीवो बुधैर्मतः ।
ज्ञोऽत एवेति सूत्रं हि ततो व्यासेन सूत्रितम् ॥ ८९९॥

विज्ञान यज्ञं तनुते ज्ञानोक्तिश्चेति याऽऽत्मनः ।
विज्ञानगुणसारत्वात् सूत्रे सा प्राज्ञवन् मता ॥ ९००॥

नाना जीवा हि लोकेऽस्मिन् रामस्यांशाः सनातनाः ।
ममैवांशो जीवलोके जीवभूतः सनातनः ॥ ९०१॥

जीवे नित्ये निजांशत्वमेवं गीताकृतेरितम् ।
प्रभावतः प्रभावद्धि जीवेंऽशत्वं हि ब्रह्मणः ॥ ९०२॥

प्रभावानिव ब्रह्मांशी जीवानां मन्यते बुधैः ।
उच्यते चैकदेशत्वाद् विशिष्टांशो विशेषणम् ॥ ९०३॥

ब्रह्मणस्तु शरीरत्वाज्जीवो ब्रह्मविशेषणम् ।
प्राधान्यान्न विशेष्यांशे चांशता प्राज्ञसम्मता ॥ ९०४॥

न जायते श्रुतौ चैवं नित्यत्वमात्मनः श्रुतम् ।
स्तन्यपानप्रवृत्तिर्न जीवे चानित्यता यदि ॥ ९०५॥

जीवानां सृष्टिवादस्तु देहयोगेन नान्यथा ।
जीवानां मृत्युवादोऽपि जीव देह वियोगतः ॥ ९०६॥

अनादिकालतो बद्धा जीवा दैवाख्यकर्मणा ।
अत्र कर्माणि कुर्वन्ति भुञ्जन्ति तत्फलानि च ॥ ९०७॥

बद्धाश्च गुणमय्या ते दैव्या श्रीराममायया ।
ज्ञानप्रकाशसङ्कोचं प्राप्ताश्च प्राकृता नराः ॥ ९०८॥

वदन्ति मलिना स्वाँश्च संसारिणोऽज्ञतायुतान् ।
नानायोनिषु सञ्जाता देहात्मभ्रमकारिणः ॥ ९०९॥

रामाधीनत्वशून्यस्व स्वातन्त्र्यमतिशालिनः ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवानिति ॥ ९१०॥

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्ये इत्यज्ञानविमोहिताः” ॥ ९११॥

स्वकर्मणः फलस्याथ स्वतन्त्रं च फलप्रदम् ।
रामतुल्यं हि मन्यन्ते रामभिन्नं सुरासुरम् ॥ ९१२॥

तापत्रयेण सन्तप्ता अनाथा दुःखिनस्ततः ।
रामानुकम्पया जाताः सत्सङ्गरुचयस्तथा ॥ ९१३॥

सद्गुरुं च प्रपन्ना ये राममन्त्रेण दीक्षिताः ।
स्मरन्तो ब्रह्म रामं ते देहं त्यक्त्वाऽर्चिरादिना ॥ ९१४॥

रामधाम्नि गताश्चाथ श्रीरामगुणसंयुताः ।
नित्यानन्तसुखं प्राप्ता दुःखमूलविवर्जिताः ॥ ९१५॥

रामानुभवकतीरो भोगसाम्यं गतास्तथा ।
ज्ञानसङ्कोचशून्याश्च जगद्व्यापारवर्जिताः ॥ ९१६॥

सर्वलोक सुश्चारा रामकैकर्यकारका ।
तेषां मुक्तिमवाप्तानां कर्मबन्धः पुनर्न हि ॥ ९१७॥

दुःखार्ण वे निमज्जन्तं दृष्ट्वा जीवमहेतुकः ।
करुणासिन्धुरामस्य जायते कोऽप्यनुग्रहः ॥ ९१८॥

पुण्यं भवति चाज्ञातं रामस्यानुग्रहेण हि ।
अभावो जायते तस्माद् विद्वेषप्रतियोगिकः ॥ ९१९॥

श्रीरामरामभक्तानामाभिमुख्यस्य कारणम् ।
तज्जन्यादाभिमुख्याद्धि जिज्ञासा समुदेति च ॥ ९२०॥

सम्बन्धिनी विभागस्य सङ्ग्रहासङ्ग्रहाईयो ।
श्रीमद्रामस्य भक्तानां संवादो जायते ततः ॥ ९२१॥

भवत्यनन्तरं तस्मात् सदाचार्यसमाश्रयः ।
सदाचार्याश्रयेणाथ हेयोपादेयनिश्चयः ॥ ९२२॥

रामेतराच्च वैराग्यं रामे प्रीतिश्च जायते ।
निवृत्ते रामभिन्नानां रामप्राप्तेश्च कारणम् ॥ ९२३॥

अङ्गीकरोति तत्पश्चात् सिद्धोपायश्च चेतनः ।
श्रीरामप्राप्तये सोऽथ त्वरते भृशमुत्सुकः ॥ ९२४॥

रामः स्मरति तं चाथ स्वसम्प्राप्तिसमुत्सुकम् ।
यथा स्वाप्त्युस्सुकं वत्सं धेनुर्वात्सल्यवारिधिः ॥ ९२५॥

आश्लिष्टे च विनष्टे स्तस्ततस्तत्पुण्यपापके ।
भागेनाथ विनष्टे स्तस्तत्प्रारब्धात्मके च ते ॥ ९२६॥

मनश्चेन्द्रियसंयुक्तं प्राणेन तस्य युज्यते ।
प्राणो जीवेन संयुक्तो भूतसूक्ष्मैस्तु युज्यते ॥ ९२७॥

सर्वेश्वरस्य रामस्य संसर्गो जायते ततः ।
तन्मार्गस्य प्रकाशोऽथ हार्दरामानुकम्पया ॥ ९२८॥

नाड्या मूर्धन्यया चाथोकामति हृदयात् किल ।

शरोरान्निर्गतो भक्त ऊर्ध्वे याव्यर्क रश्मिभिः ॥ ९२९॥

निदाघे चोष्मतासत्त्वान्निशायाश्चापि रश्मयः ।
अचर्यन्त्यर्चिरादिस्थं पुमांसमातिवाहिकाः ॥ ९३०॥

दिनं तत्रार्चिषोऽह्नश्च शुक्लं पक्षं च गच्छति ।
समेति शुरूपक्षात स उत्तरायणमेव हि ॥ ९३१॥

तस्मात् संवत्सरं तस्माद् वायुं वायोश्च भास्करम् ।
सूर्याद् विधुं विधोश्चाथ विद्युतं वरुणं ततः ॥ ९३२॥

ततश्चेन्द्रं ततो धातृलोकं गच्छत्युपासकः ।
अतिक्रामति पश्चाद् भूम्याबावरणसप्तकम् ॥ ९३३॥

उल्लङ्घ्य प्रकृतिं सोऽथ विरजामवगाहते ।
ततः सूक्ष्माच्छरीराद्धि विश्लिष्टश्च भवत्यसौ ॥ ९३४॥

प्रादुर्भवत्यथो चास्यानघत्वादिगुणाष्टकम् ।
अमानव करस्पर्शो भवत्यस्य ततः परम् ॥ ९३५॥

श्रीमद्रामस्य सङ्कल्पाद् दिव्यदेहो भवत्यसौ ।
कालकाल्येतरे दिव्ये देशे प्राप्तो भवत्यथ ॥ ९३६॥

सरस्यैरम्मदोयेऽथ दिव्ये स्नानं करोति सः ।
भवत्यनन्तरं चासौ दिव्यभूषणभूषितः ॥ ९३७॥

दिव्यं चाथ विमानं हि समारूढो भवत्ययम् ।
तिल्यारण्यप्रवेशोऽस्य विमानारोहणादनु ॥ ९३८॥

अप्सरोभिश्च दिव्यैर्हि भव्या चास्य सुसत्कृतिः ।
तिल्यगन्धप्रवेशोऽस्य तादृश्याः सत्कृतेः परम् ॥ ९३९॥

तिल्यगन्धं प्रविश्याथ ब्रह्मगन्धं विशत्ययम् ।
सम्प्राप्नोति ततश्चायं प्राकृतेतरगोपुरम् ॥ ९४०॥

वैकुण्ठनगरस्याप्तिर्भवत्यस्य ततः परम् ।
भवत्ययं च तत्र श्रीनारायणाभिनन्दितः ॥ ९४१॥

गोलोकस्याथ सम्प्राप्तिर्भवत्यस्य महात्मनः ।
भवत्यसौ हि तत्राथ श्रीकृष्णेनानुमोदितः ॥ ९४२॥

ततः साकेतलोकस्य प्राप्नोत्ययं च गोपुरम् ।
ब्रह्मविष्णुमहेशाद्यैर्देवैः स्तुतं च वन्दितम् ॥ ९४३॥

वेदैर्निवेदितं चाथ श्रीरामेणाभिनन्दितम् ।
समृद्धं परमं दीप्तं सर्वथा चाथ सर्वदा ॥ ९४४॥

परात्परमयोध्यं च सुषमासागरं शुभम् ।
अयोध्यानगरं चासौ सम्प्राप्नोति ततः परम् ॥ ९४५॥

यत्रास्ति सरयू रम्या प्रमोदाख्यं च काननम् ।
लीलास्पदं च रामस्य रत्नाचलः सुशोभितः ॥ ९४६॥

पूर्वद्वारे च यस्यास्ति सुग्रीवो हि कपीश्वरः ।
द्वारे तु पश्चिमे श्रीमान् राक्षसेन्द्रो विभीषणः ॥ ९४७॥

उत्तरे तु महावीरो, बालिपुत्रस्तथाङ्गदः ।
दक्षिणे करुणा-सिन्धुर्मारुतिश्च महाबलः ॥ ९४८॥

दिव्यसूरिसदः प्रत्युद्गच्छत्ययं समुत्सुकः ।
राजमार्गं ततो याति ब्रह्मतेजो विशत्यथ ॥ ९४९॥

दिव्यस्य गोपुरस्याथ प्राप्तिर्भवति चास्य हि ।
ब्रह्मवेश्म प्रवेशोऽथ भवत्यस्य महात्मनः ॥ ९५०॥

कल्पवृक्षतले चास्ति साकेते ब्रह्मवेश्मनि ।
सुवर्णमण्डपे यत्र भासुरा रत्नवेदिका ॥ ९५१॥

रत्नसिंहासनं यत्र वर्त्तते सूर्यसन्निभम् ।
विशालं कमलं दिव्यं सहस्रदलशोभितम् ॥ ९५२॥

अधःस्थिते वितानस्य तत्र सिंहासने वरे ।
आसीनं परमं रम्यं श्रीरामं सीतया सह ॥ ९५३॥

दिव्यायुधान्वितं चाथ दिव्यपार्षदसंयुतम् ।
दिव्यभूषणवस्त्रैश्च भूषितं वीक्षते ह्यसौ ॥ ९५४॥

नमस्करोति साष्टाङ्गमभ्यासं समुपैति च ।
कोऽसि त्वमि ति पृष्टोऽथ श्रीरामेण परात्मना ॥ ९५५॥

शेषोऽहं शेषिणो नाथ तन्दैव सकलेशितुः ।
इत्येवं निगदन्तं च श्रीरामः करुणार्णवः ॥ ९५६॥

स्वीयोत्सङ्गसमारूढमालिङ्ग्य विदधाति हि ।
सर्वान् कामानवाप्नोति चायं रामेण सह ततः ॥ ९५७॥

गुणानां विग्रहादेश्च स्वरूपरूपयोस्तथा ।
प्रत्यक्षाज्जायते प्रीतेः प्रकर्षो हि ततः परम् ॥ ९५८॥

अनेक विग्रहाणां च जायतेऽथ परिग्रहः ।
कामचारे च लोकानां समर्थोऽपि भवत्ययम् ॥ ९५९॥

अवस्थासु च सर्वासु सर्वयोर्देशकालयोः ।
केङ्कर्येषु च सर्वेषु याति चायं प्रसन्नताम् ॥ ९६०॥

छान्दोग्ये मुक्तजीवस्य पुनरावृत्तिवर्जनात् ।
भगवताऽपि गीतायां बोधयता धनञ्जयम् ॥ ९६१॥

भगवन्तमुपेतस्य पुनर्जन्मनिषेधनात् ।
श्रीरामं समवाप्तोऽयं कर्मयोनि न गच्छति ॥ ९६२॥

आनन्दी नाथ जीवोऽयं रामं प्राप्य रसात्मकम् ।
समिच्छति पुनर्जन्म दुःखालयमशाश्वतम् ॥ ९६३॥

सत्यसन्धः प्रतिश्रुत्य प्रपन्नायाभयं स्वयम् ।
निवर्त्तयेद् भये नैनं श्रीरामः श्रितवत्सलः ॥ ९६४॥

श्रीरामपद्धतौ चैवमर्चिरादिकपद्धतिः ।
श्रीमद्रामेश्वरार्येण सङ्क्षेपेण हिः वर्णिता ॥ ९६५॥

बद्धमुक्तत्वभेदाभ्यां जीवा चैवं द्विधा मताः ।
मुक्ताश्च कर्मणा मुक्ता बद्धा बद्धाश्च तेन हि ॥ ९६६॥

कादाचित्काश्च नित्याश्च मुक्तभेदो द्विधा मतः ।
आदिमाः पूर्वमुक्ताश्चान्तिमा बद्धाः कदापि न ॥ ९६७॥

अणुजीवो मतो ज्ञाता “एष ह द्रष्टे” तिश्रुतेः ।
ज्ञातेतिकथनाज्जीवे कर्त्तृत्वमपि सिद्ध्यति ॥ ९६८॥

सामानाधिकरण्येन ज्ञानकर्तृत्वयोस्ततः ।
चेतनोऽहं करोमी तिप्रतीतिरुपपद्यते ॥ ९६९॥

कर्त्तृत्वमात्मनो धर्मो भोक्ताभोग्यमि तिश्रुतेः ।

चेतनस्यात्र कर्तृत्वं भोक्तृत्वे हि प्रयोजकम् ॥ ९७० ॥

अन्यः करोति भुङ्क्तेऽन्यः कथञ्चिन्नोपपद्यते ।
प्राज्ञैः कर्मकर्तैर्हि सम्मतं कर्मणः फलम् ॥ ९७१ ॥

आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ।
इतिश्रुतिप्रमाणत्वात् कर्त्तृत्वं नात्मनो ननु ॥ ९७२ ॥

किन्त्वन्तःकरणस्थं तदभ्यस्तमात्मनीति नु ।
मैवं प्रतीयतेचात्र कर्तृता मनसो न यत् ॥ ९७३ ॥

किन्तूपकरणत्वं वै भोक्तृत्वे चात्मनो मतम् ।
अन्यथा चेन्द्रियादेश्च कर्त्तत्वं सम्भवेत् खलु ॥ ९७४ ॥

कर्त्तृत्वमात्मनस्तस्मान्नैषा श्रुतिर्निषेधति ।
कर्त्ता शास्त्रार्थवत्त्वाद् वै व्यासेन सूत्रितं ततः ॥ ९७५ ॥

ततश्चा हं करोमी तिप्रतीतिरुपपद्यते ।
यद्यात्मनो न कर्तृत्वं शास्त्राणां व्यर्थता भवेत् ॥ ९७६ ॥

हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ ९७७ ॥

नन्वेवं प्रतिषिद्धा च ह्यात्मनो हन्तृता श्रुतौ ।
इति चेन्नात्मनित्यत्वाद् हन्तृता वर्जिता यतः ॥ ९७८ ॥

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमुढात्मा कर्त्ताऽहमिति मन्यते ॥ ९७९ ॥

इत्येवं ननु गीतायां निषिद्धा कर्त्तृतात्मनः ।
मैवं जीवस्य कर्तृत्वं सांसारिकप्रवृत्तिषु ॥ ९८० ॥

न स्वरूपप्रयुक्तं हि गुणसंसर्गतो यतः ।
उदीरितश्च गीतायामुत्तरत्रायमाशयः ॥ ९८१ ॥

पञ्चैतानि महाबाहो कारणानि निबोध मे ।
अधिष्ठानं तथा कर्त्ता करणं च पृथग्विधम् ॥ ९८२ ॥

विविधा च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् ।
शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः ॥ ९८३ ॥

न्याय्यं वा विपरीत वा पञ्चैते तस्य हेतवः ।
तत्रवं सति कर्त्तारमात्मानं केवलं तु यः ॥ ९८४॥

पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ।
प्रश्नोपषिदि कर्त्ता स्पष्टं जीवः समीरितः ॥ ९८५॥

ग्रहणस्य विहारस्य चात्मनः कथनान्तच्छ्रुतौ ।
आत्मनश्चैव कर्तृत्वं बादरायणसम्मतम् ॥ ९८६॥

विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च ।
तैत्तरीयेऽपि चेत्येवं कर्त्तत्वमात्मनः श्रुतम् ॥ ९८७॥

बुद्धेरेव हि कत्र्त्तत्वं साङ्ख्यास्तु प्रवदन्ति हि ।
सम्भवेच्च तथात्वे तु बुद्धेरेव हि भोक्तृता ॥ ९८८॥

कर्तृत्वे च मते बुद्धेः समाधिश्च भवेन्न हि ।
आत्मनः कर्तृता तस्मात् सिद्धान्ते स्वीकृत ख ॥ ९८९॥

तक्षावत् स्वेच्छया चात्मा करोति न करोति च ।
जडबुद्धेस्तु कर्तृत्वे व्यवस्थैषा न सम्भवेत् ॥ ९९०॥

त्वायत्तं राघवायत्तं वा कर्तृत्वं किमात्मनः ।
जीवस्य भोक्तृता तस्मात् पक्षश्चाद्यो मनोहरः ॥ ९९१॥

विधिनिषेधशास्त्राणां वैयर्थ्य चान्यथा भवेत् ।
पिप्पलं स्वादु चात्तीति जीवस्य भोक्तृता श्रुतौ ॥ ९९२॥

इति चेन्न यतो जीवे राघवाधीनकर्तृता ।
अन्तः प्रविष्टः शास्ते” ति श्रुतौ रामो हि शासकः ॥ ९९३॥

विधिनिषेधशास्त्राणां वैयर्थ्य हि तथा ननु ।
मैवं जीवस्य यत्नं यद् वीक्ष्य स्वानुमतिं खलु ॥ ९९४॥

रामो दत्ते ततो जीवो योग्यो विधिनिषेधयोः ।
तथा प्रवर्त्तते चाथ फलदाने तु चात्मनः ॥ ९९५॥

वैषम्यं चाथ नैर्घृण्यं मन्येते राघवे न तु ।
अवोचद् भगवाँश्चैवं गीतायां स्वयमेव हि ॥ ९९६॥

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ ९९७॥

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजत्रमशुभानासुरीष्वेव योनिषु ॥ ९९८॥

एष एव साधुकर्मे त्यादिश्रुतिप्रमाणतः ।
अखिलं चात्मकर्त्तृत्वं रामाधीनं हि मन्यते ॥ ९९९॥

कर्त्तृत्वं राघवाधीनं निर्दोषं श्रुतिसम्मतम् ।
विशिष्टाद्वैतसिद्धान्ते जीवस्य मन्यते ततः ॥ १०००॥

श्रीचिदानन्दशिष्येण पूर्णानन्देन धीमता ।
श्रीप्रमिताक्षराख्याया वृत्तेः सारो विनिर्मितः ॥ १००१॥

इति जगद्गुरु श्रीपूर्णानन्दाचार्य सिद्धान्तसार्वभौम विरचितः
श्रीबोधायनमतादर्शः सम्पूर्णः ।

---

*Shri Bodhayanamatadarshah*

pdf was typeset on January 19, 2024

Please send corrections to *sanskrit@cheerful.com*

